





# अद्वैतमार्तण्डः


मद्रपुर संस्कृत महाविद्यालयाधमर्ण

कलकत्ता विश्वविद्यालयाध्यापक

महामहोपाध्यायादिविरुदाङ्कित

श्रीमदनन्तकृष्ण शास्त्रिणा


प्रकाशितः ।



श्रीकाञ्चीकामकोटिपीठाधिष्ठातृ कुम्भघोणाधिष्ठान प्रातःस्मरणीय सुनामधन्य
सनातनधर्मजीवातु-जगद्गुरु श्री १००८ शङ्करभगवत्पादाः ।





इदं तु व्यासतात्पर्यनिर्णयप्रतिपाद्यं तत्त्वम्—यत् साङ्ख्याद्यनुवादमहिम्नाऽद्वैतमतमेव व्यासमतम्; तुरीयमेव परमात्मस्वरूपं सर्ववेदान्ततात्पर्यविषयः, नावकाशः त्रिमूर्तिषु कस्याप्युत्कर्षापकर्षकल्पनायाः, नवा प्रामाणिकत्वं सांप्रतत्वं वा।

समालोचनप्रसङ्गेनास्य निबन्धस्य, प्रबन्धधुरपरं प्रबन्धं महामहोपाध्याय-वैष्णवोत्तम—श्रीदेशिकाचार्यमहोदयाः अभिधानेन व्याससिद्धान्तमार्तण्डम्। उद्देश्यमस्य निबन्धस्य विरचने "पूर्वाचार्यैः स्वरूपदौस्थ्यादिदूषणसहस्रेणोन्मूलितमपि मायावादमुज्जिजीवयिषुः कश्चिदर्वाचीनो व्यासतात्पर्यनिर्णयनाम्ना कमपि ग्रन्थं निबबन्ध, अहो मोहमाहात्म्यम्। अयं किल कपिलाद्यनुवादयुक्त्या मायावादं पुनरुन्मिमीलयिषति। असन्निधानात्तु पूर्वाचार्याणां तस्यैतस्य प्रत्यवस्थानस्य प्रशमनभारः पतितोऽस्मासु" इति स्वयमेव ग्रन्थकारा इमे वदन्ति।

वयं तु प्रतीमः—व्यासतात्पर्यनिर्णयकाराः न महामहोपाध्याय—श्रीदेशिकाचार्यमहाशयेभ्योऽप्यर्वाचीनाः, न वाद्वैतवादसमालोचनमात्रेण मोहमाहात्म्यस्यैव वशंवदाः। अर्वाचीनत्वं कश्चित्पदप्रयोगेण निकृष्य व्यवहरणं वा न वस्तुगौरवं स्वाभाविकमन्यथयिष्यति। न हि कस्तूरिकामोदः शपथेन निवार्यते। सत्यं महामहोपाध्यायाः अद्वैतमतोन्मूलनभारं तेष्वेव सांप्रतं पतितं मन्यन्ते, वयं तु स्वल्पज्ञाः सत्स्वेव प्रचण्डेषु व्याससिद्धान्तमार्तण्डनिराकरणसमर्थेषु पूज्येषु, स्वबुद्धिविकासार्थमेवाद्वैतमार्तण्डाभिधमिमं निबन्धं व्याससिद्धान्तमार्तण्डादिसमालोचनप्रसङ्गेन सांप्रतं प्रियपाठकानामुपहरामः। मुनित्रयसरूपा इव न वयमात्मानं नियोगपर्यनुयोगानर्हं मन्महे इति, छान्दसमार्तण्डपदपरित्यागेन मार्तण्डपदं नामनि योजितम्।

व्यासतात्पर्यनिर्णयकाराः महाभारतवाक्यानि, ब्रह्मसूत्राणि, किं बहुना? श्रुतिवाक्यान्यपि सहस्रमद्वैतवादसमर्थनपराणि तत्तत्प्रामाणिकभाष्यकारादिविवरणसहितान्यद्वैतवादव्यवस्थापनार्थं सत्यं शक्यान्युपक्षेप्तुम्, परन्तु मतान्त-

रावलम्बिनो विवरणान्तराद्यवलम्बनेन तत्रापि तेऽप्याचार्या वयमप्याचार्या इति विप्रतिपद्येरन्निति कृत्वैव ग्रन्थान्तरानुवादमवलम्ब्यैवाद्वैतमतं वैयासिकमिति व्यवस्थापयाम इति प्रतिजानते। व्याससिद्धान्तमार्तण्डकारा अपि—"यद्यपि नीलकण्ठादिभिर्महाभारतमपि क्लिष्टकल्पनयाऽद्वैतपरतया योजितम्; तथापि प्रश्नप्रतिवचनप्रकारैरद्वैतपरत्वाभावस्य प्रस्फुटतया" इत्यादि वर्णनेन स्वाशयविरुद्धं नीलकण्ठभाष्यमप्यद्वैतपरत्वोपपादकांशमात्रेऽप्रमाणं मन्यन्ते—बहुत्वपरेषु विषयेषु नीलकण्ठभाष्यादृतमहाभारतपाठस्यैव साधुत्वं व्यवस्थापयन्तोऽपीति, न व्यासतात्पर्यनिर्णयकाराणां संभावना सर्वथा निरवसरा। सर्वथा तु—आत्मैकत्व-बहुत्वादिविचारप्रकरणादिगतानि महाभारतवाक्यानि व्याससिद्धान्तमार्तण्डकाराभिमतरीत्या न स्वीयमाशयं प्रश्नप्रतिवचनाद्येकवाक्यताभङ्गापत्त्या परिपोषयन्तीति, महाभारतगता अपि आत्मस्वरूपनदेकत्व-व्यापकत्वादिव्यवस्थापनपरा भागा अद्वैतवादमेवोपबृंहयन्ति।

ब्रह्मसूत्राण्यपि—परब्रह्मप्राप्तेर्गतिसापेक्षत्वादिविषयमधिकृत्य प्रवृत्तानि गतिनिरपेक्षो ब्रह्मभावः, कार्यब्रह्मप्राप्तिरेव तु गतिसापेक्षेति विशदयन्त्येव। यथाच—"कार्यं बादरिरस्य गत्युपपत्तेः" इत्यस्यैव सिद्धान्तसूत्रत्वम्, नतु "परं जैमिनिर्मुख्यत्वादि"त्यस्य, तथा न केवलमस्मद्वेदान्तपरिभाषाभूमिकायाम्, किन्तु प्रकृतग्रन्थेऽपि सम्यगेव निरूपितम्। बादरिपक्षे पञ्च सूत्राणि,जैमिनिपक्षे तु त्रीणि सूत्राणि। तत्र जैमिनिपक्षीयसूत्रत्रयस्य निरासार्थं चत्वारि सूत्राणि, स्वपक्षस्थापनार्थं तु "कार्यं बादरिरस्य गत्युपपत्तेः" इति पञ्चमं सूत्रमिति, व्याससिद्धान्तमार्तण्डकाराणां बादरिमतमेव जैमिनिना निरस्यत इति वादो न क्षोदक्षमः। सति चैवम्—"प्रतिषेधादिति चेन्न" "स्पष्टो ह्येकेषाम्" इत्यत्र "स्पष्टो ह्येकेषामि"ति पृथगेव सिद्धान्तसूत्रमिति, अद्वैतिनां विवरणमेव सूत्राक्षरानुगुणम्।

तैत्तरीयोपनिषदि—ततोऽन्तरस्ततोऽन्तर इत्यानन्दमयान्तस्य निरूपितस्य कारणमुखेन भृगुवल्ली मयट्परित्यागेनोपदेशनार्थं प्रवृत्ता "अन्नं ब्रह्मेति व्यजानादित्यादाविव "आनन्दो ब्रह्मेति व्यजानात्", इत्यत्रापि मयट्परित्यागेनैव प्रवर्तत इति, नान्नमयादिभ्यो विशेषमानन्दमयस्याभिप्रैति" इत्याद्यवगमात्, सूत्रा-

णामप्यानन्दमयाद्ब्रह्मतायामेव स्वारस्याधिक्याच कारणत्वमेव ब्रह्मणः तटस्थलक्ष- णविधया प्रथमज्ञानार्थमपेक्ष्यते, नतु शरीरशरीरिभावः पारमार्थिकः तटस्थरूपो वा; अन्यथा कथमन्नमयपर्यायेऽपि शारीरत्वं न निर्दिष्टम्, इत्यादयो बहुतरा विषयाः निबन्धमध्येऽत्र समुपक्षिप्ता इति, आनन्दमयाद्यधिष्ठानशुद्धब्रह्मनिर्णय एव तात्पर्यं तैत्तरीयोपनिषद इति, बादरायणमतमद्वैतमेवेत्यत्र तदप्यधिकरणमनुगुणमेव।

'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' 'मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्,' कार्यं बादरिरस्य 'गत्युप- पत्तेः' 'वैधर्म्याच न स्वप्नादिवत्' 'न विलक्षणत्वाधिकरणादिसूत्राणि, 'प्रियशिर- स्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' 'भोगमात्रसा- म्यलिङ्गाच्च' 'तन्वभावे सन्ध्यवदुपपत्तेः' 'भावे जाग्रद्वत्' देवताधिकरणादीनि चा- द्वैतमत एवोपपन्नानीति कथं ब्रह्मसूत्रकाराणां नाद्वैतमतमभिप्रेतम् ?

पुरुषसूक्तप्रतिपाद्यम्, सुबालोपनिषत्प्रतिपाद्यं च विष्णुशरीरकं ब्रह्मै- वेति सुबालोपनिषत्पञ्चमखण्डस्य, यत्र विष्णोरप्यन्तर्यामी नारायण इति व्यव- स्थापितम्, अथर्वशिखोपनिषदश्च—यत्र चतुष्पाद्ब्रह्मणः प्रथम-द्वितीय-तृतीय- पादाः ब्रह्म-विष्णु-रुद्राः, चतुर्थपादस्तु पुरुष इति व्यवस्थापितम्, अनुसारेणावग- म्यते। अन्तरधिकरणे 'अक्षिणी'ति द्वित्ववचनेन रूपक्षस्य व्यावृत्तिरिति वदन्तः सिद्धान्तमार्ताण्डकाराः कथं पुरुषसूक्तप्रतिपाद्यं सहस्राक्षमपि तत्र न व्यावर्तयन्ति ?

'ईक्षतेर्नाशब्दम्' इति सूत्रस्य आशब्दमीक्षतेः, ना पुरुष एव पुरुष सूक्तप्रतिपाद्यो ब्रह्मेति, पाराशर्यविजयकारैरेव कल्पनेयं देवतान्तरनिरासा- सम्भवेन निरस्तैवेति, पूर्वपक्षांशमात्रमत्र मार्ताण्डकारैः संकलितम्।

पाञ्चरात्रप्रामाण्यनिराममेव 'उत्पत्त्यसम्भवात्' इत्यादिभिः सूत्रैस्स्वर- सतः सूत्रकाराः कुर्वत इति, "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा" इति वाक्यनिर्दिष्टेषु वैदिकमद्वैतमतमेकमेवावशेषितं सूत्रकारैः, यत्रात्मैकत्व-व्या- पकत्वादिपक्षानेव स्वमतान् बादरायणाचार्या स्पष्टमुद्घोषयन्ति महाभारते।

।

"विज्ञानादिभावे वा" इति ब्रह्मभावस्यानुसन्धानमनुत्पत्तिसमर्थनार्थं स्वरूपतः पाञ्चरात्रमते जीवोत्पत्तिमेव सिद्धान्तसिद्धां साधयति।

अस्मिन् हि निबन्धे प्रसङ्गतोऽस्मदीयवेदान्तपरिभाषाभूमिकाविमर्शोपि स्वनामधन्य—श्रीगोपालाचार्यमहाशयानां समालोचितः, यस्यैव तत्र तत्र "विमर्शोक्तिः" इत्यादिनानुवादोऽत्र निबन्धे दरीदृश्यते। विमर्शकारा हि—पाञ्चरात्रप्रामाण्यविषये, विशिष्टब्रह्मकार्यकारणभावविषये, उभयलिङ्गाधिकरणे, अंशाधिकरणादौ च विमर्शं स्वीयं विशेषत आद्रियन्ते। पाञ्चरात्रप्रामाण्यविषये—शङ्कर भगवत्पादादीनामपि तत्प्रामाण्यमेवाभिमतमिति कल्पनातु तेषां स्वकपोलकल्पना क्रीडामात्रमित्येव वयं पश्यामः। स्पष्टं हि तत्प्रामाण्यनिरसनं शाङ्करग्रन्थेषु भामती-कल्पतरु-परिमलादिषु दृश्यते। विशिष्टस्य ब्रह्मणः कारणत्वं न सूत्रारूढमिति स्वयमेव विमर्शकाराः स्वीकुर्वन्ति। पाञ्चरात्रप्रामाण्यचर्चायामप्रातिकूल्येऽपि विशिष्य "परिमलोक्तं तु नैवाद्रियामहे" इति व्यर्थमेवेमे परिमलं विद्विषन्ति।

अद्वैतिनां घटपदेन तदवच्छिन्नस्य चैतन्यस्य ग्रहणवदस्मन्मतेऽपि सर्वस्य ब्रह्मप्रकारत्वमिति कल्पनातु—"यादृशं ब्रह्मणः सत्त्वं तादृशं स्यात् जगत्पयो"ति न्यायामृतकल्पनातुल्येति, श्रीमधुसूदनसरस्वतीनां 'विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रम्, तदेव ममापीति वदतो वरस्य भ्राता भवानि" त्युत्तरसदृशमेवोत्तरमत्रापि भवितुमर्हति, वक्तव्यं चात्र सर्वं ग्रन्थ एवोपनिबद्धम्।

अंशाधिकरणयोजनायामस्माकं योजना भाष्यविरुद्धेति बहुशस्तत्र तत्र विमर्शकारा उपक्षिपन्ति। शाङ्करभाष्यगतानुज्ञापरिहारसूत्रावतरणभाष्यानुसारिण्यस्माकं योजनेति, नात्र भाष्यविरोध इत्याद्यपि विस्तरेण निबन्धेऽत्र "न स्थानतोऽपी" त्यधिकरणसमालोचनपूर्वकं विवेचितमेव।

पञ्चदशभिरेव दिनैरस्य मुद्रापणप्रबन्धं कार्यान्तरपरित्यागेनापि व्यवस्थापितवन्तो मुद्रणालयाध्यक्षाः, संशोधनभारमूरीकृतवन्तो महामहोपाध्याय पूज्य श्रीसीतारामशास्त्रिमहाशयाश्चास्मानधमर्णयन्तीति शम्।

---




श्रीरस्तु ।

# विषयानुक्रमणिका ।

विषय | पृष्ठ संख्या

विषय | पृष्ठसंख्या

विषय पृष्ठ संख्या










# अद्वैतमार्तण्डः



मातामहमहाशैलं महस्तदपितामहम् ॥
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

श्री व्याससिद्धान्तमार्ता (१) ण्डादिका महामहोपाध्यायादि-श्रीदेशिकाचार्यादिकृतीरुपलभ्य प्रार्थनामनु केषांचन सुहृदां सादरमेव तत्समालोचनार्थं प्रवर्तामहे ।

व्याससिद्धान्त मार्ताण्डानुवादः ॥

एते हि परिच्छेदचतुष्टयात्मकेऽत्र निबन्धे "श्रियः पतिर्नारायणः परं ब्रह्म, अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेवापुनरावृत्तिलक्षणमोक्षपुरुषार्थ इति शारीरमीमांसाप्रणेतुर्भगवतो वेदव्यासस्य सिद्धान्त इति प्रतिज्ञाय कारणवाक्यानामेव ब्रह्मसमर्पकत्वस्य सूत्रकाराभिमतत्वात् तेषांच बहूनां "सदेव सोम्येदमग्र आसीत्" इत्यादीनां सामान्यशब्दघटितानां तद्विशेषसमर्पकनारायणशब्दघटितैः—"एको ह वै नारायण आसीत् न ब्रह्मा नेशानः" इत्यादिभिः पुरुषसूक्तेन चैकवाक्यतया नारायणमात्रपर्यवसायितैव स्वीकर्तव्येति निरूपयन्तः, "ईक्षतेर्नाशब्दम्" इति सूत्रमेवं व्याचक्षते—आशब्दम् शब्दपर्यन्तम्, ईक्षतेः ईक्षितृत्वश्रवणात्, ना पुरुष एव पुरुषसूक्तप्रतिपाद्यो ब्रह्मेति । अस्मिंश्च प्रसङ्गे गतिसामान्यमपि कारणवाक्यानां सर्वेषां नारायण एव पुरुषोत्तमे श्रियः पत्यौ

(१) शकन्ध्वादित्वात् मार्तण्ड इत्येव साधु, "पुनर्मार्ताण्डमिति दीर्घस्तु छान्दस इति बालमनोरमादिः ।

चेति "गतिसामान्यात्" इति सूत्राभिमतं यदेते संगृह्णन्ति, तदिदमेत एव विस्तरेण तृतीयपरिच्छेदेऽथर्वशिखोपनिषदादौ शिवैककारणतावाक्यानामपि विष्णावेव तात्पर्यस्योपपादनेन पाराशर्यविजये ४५-४८ तमपृष्ठेषु यथोक्तं तथैव निष्कृष्यानुवादेन प्रतिपादयन्ति ।

व्याससिद्धान्तमार्ताण्डसमालोचनोपक्रमः

सत्यं शैववैष्णववादाः खण्डनमण्डनप्रणाल्या पूर्वाचार्यैर्बहुभिरेव शिवतत्त्वविवेकादिद्वारा सुदूरमेव विचारिताः; ब्रह्मसूत्राणामपि विष्णूत्कर्ष एव तात्पर्यमिति "ईक्षतेर्नाशब्दमि"ति सूत्रादीनामन्यथा योजनेन विचारप्रणाली त्वियं श्रीदेशिकाचार्याणां स्वकपोलकल्पनेवेति नाविदितमिदं कस्यापि । यतः पाराशर्यविजयकारा अपि ईक्षत्यधिकरणे "इतरेतु" इति पक्षविशेषमुपस्थापयन्तो योजनमिदमुक्तसूत्रस्य प्रदर्शयन्ति । "इतरेतुपक्ष"निराकरणावसरे रुद्रादिचेतनान्तरनिरासे नोक्तस्य सूत्रस्य तात्पर्यमिति पाराशर्यविजयोक्तं तु स्वाशयविरुद्धत्वादाचार्यवर्या न संगृह्णन्तीति त्वन्यदेतत् । पुरुषसूक्तादीनामेव श्रुत्यन्तरनिर्णायकत्वमिति प्रक्रियातु पाराशर्यविजयेऽपि समुपलभ्यत एव; पुरुषसूक्तस्य क्वापि सूत्रे विचाराभावेऽपि "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ॥ ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितम्" ॥ इत्युक्तेः कारणचिन्तामात्रस्य पुरुषसूक्तार्थचिन्तापर्यवसानव्यवस्थापनेन महाचार्याः सूत्राणामपि तु पुरुषसूक्तविषयत्वं कल्पनीयं मन्यन्ते ।

ईक्षतेर्नाशब्दमित्यस्योक्तविधयोजनान्तरासंभवः ॥

वयं तु मन्यामहे — ईक्षतेर्नाशब्दमित्यादिसूत्राणामुक्तविधं योजनं न क्षोदक्षममिति । रुद्रादिचेतनान्तरकारणतानिरासे युक्तसूत्राभिमते न केवलमीक्षतेरितिहेतुनिर्देशायोगः, किन्तु "गौणश्चेन्नात्मशब्दात्" इत्यात्मशब्दादितिहेतुनिर्देशायोगोऽपि । नहीक्षितृत्वमात्मशब्दप्रतिपाद्यत्वं च न रुद्रादिसाधारणम् । अत्र ह्यात्मशब्दप्रयोगेण कारणस्य चेतनत्वमात्रमुपस्थाप्यते, न चेतनान्तरव्यवच्छेदोऽपि । प्रधाननिरासेऽपि रुद्रादिनिरासो न भवतीति शङ्कातु पाशुपताधिकरण एव वारयितुं शक्यत इति न परोक्तरीत्योक्तशङ्कावारणार्थमुक्तविधं योजनम-

ग्रापेक्षामहे। वस्तुतस्तु—भगवद्रामानुजाचार्या अपि स्वयं पशुपत्यादिपदवाच्यत्वे परमात्मनो न विवादः, किन्तु तन्निमित्तत्वमात्र एवेति वदन्तो रुद्राख्यनारायणमेव तुरीयं जिज्ञास्यं ब्रह्म मन्यन्तेऽभिन्ननिमित्तोपादानमिति न तिरोहितमिदम्। इदमेवात्र वयं पृच्छामः—यत् परमात्मनो रुद्रशब्दवाच्यत्वं किमनेन निरस्यते, उत कार्यत्वाद्रुद्रस्य न कारणपरमात्मतासम्भव इति। वयंतु प्रतीमः—सर्वशब्दवाच्यस्य परमात्मनो न कार्यब्रह्मविष्णुरुद्रेष्वेकमपि पारमार्थिकं स्वरूपमिति।

तुरीयस्यैव परमात्मस्वरूपस्य पुरुषसूक्तप्रतिपाद्यत्वम्॥

एतेन—शैववैष्णववादयोर्वैष्णवमतोपबृंहकनया पुरुषसूक्तस्य योजनं तद्बलेन सूत्राणां स्वमतोपबृंहकनया विवरणं च—व्याख्यातम्। पुरुषसूक्तं हि शिव-विष्णु-नारायणादिशब्दगम्यं तुरीयमेव परमात्मानं भगवन्तं विषयीकरोति, नतु श्रीवैष्णवाभिमतं श्रियः पतिं पुण्डरीकाक्षं द्व्यक्षम्; सहस्राक्षत्वादीनामतल्लिङ्गत्वात्। एतेन—श्रीपतित्वमपि—व्याख्यातम्; पुरुषसूक्ते हि "ह्रीश्च ते लक्ष्मीश्च पत्न्यावि"ति लज्जालक्ष्म्यात्मकपत्नीद्वयवत्त्वं हि भगवतो नारायणस्य यत्रोपक्षिप्तम्, न स भवदभिमतः पुण्डरीकाक्षो भवितुमर्हति।

अन्तरधिकरणप्रतिपाद्यस्य पुरुषसूक्तप्रतिपाद्यस्य च भेदापत्त्या परोक्तिनिरासः।

यत्तु— अन्तस्तद्धर्माधिकरणस्य स्वाशयोपयोगितया विवरणावसरगतम्— "*एतादृशाक्षिद्वयवत्त्वं च नारायणासाधारणो धर्मः; अत्राक्षिद्वयवतो विधानादपि त्र्यक्षव्यावृत्तिरिति* व्याससिद्धान्तमार्तण्डवाक्यम्, तदिदं पुरुषसूक्तप्रतिपाद्यस्य सहस्राक्षस्यान्तरधिकरणविषयवाक्यप्रतिपाद्यस्य द्व्यक्षस्यच स्वरूपतो भेदं गमयतीति नियतमिदं वक्तव्यम्। यद्यक्षिद्वयवतो विधानात्त्रिनेत्रव्यावृत्तिः, तर्हि कथं न सहस्राक्षव्यावृत्तिरित्याचार्या एव विवेचयन्तु। अस्मन्मतेतु सहस्राक्षोऽपि द्व्यक्षपदेन श्रीकण्ठभाष्यदिशा ग्रहीतुं शक्यत इति नानुपपत्तिः।

सहस्राक्षादिपदानां रुद्रविष्णुसाधारणानां
तदंशिनि परमात्मन्येव मुख्यता॥

परमार्थतस्तु सहस्राक्षादिपदं विष्णुसहस्रनाममध्ये विष्णाविव शिवसह-

स्रनामस्वपि महाभारत आनुशासनिके पर्वणि ४८ तमेऽध्याये पठ्यते—"सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः।......सहस्रमूर्धा देवेन्द्रस्सर्वदेवमयो गुरुः। हर्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात्।" इति। अस्यैव शिवसहस्रनामस्तोत्रस्य लिङ्गपुराणशिवमहापुराणयोरप्युल्लेख इत्यन्यत्र व्यक्तम्। अतो मन्यामहे—विष्णुसहस्रनामस्तोत्र-शिवसहस्रनामस्तोत्रादिप्रतिपाद्यं पुरुषसूक्तप्रतिपाद्यं च कारणं परमात्मस्वरूपमेव गोचरयति, नतु कार्यब्रह्मविष्णुरुद्रेष्वेकमपीति। यथाच पुरुषपदमपि तुरीये नारायण एव स्वरसम्, तथाऽनुपदमेव स्पष्टीभविष्यतीति तुरीयमेव कारणवाक्यार्थः।

विष्णोरपि रुद्रस्येवोत्पत्तिवादयोगः

यथाहि "नारायणाद् ब्रह्मा जायते नारायणाद्रुद्रो जायते" "एको ह वै नारायण आसीत् न ब्रह्मा न च शङ्करः" इति रुद्रस्योत्पत्तिराम्नायते,एवम्—"स मुनिर्भूत्वा समचिन्तयत् त एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्नि-यम-वरुण विष्णु-रुन्द्रेन्द्राः" इति विष्णोरप्युत्पत्तिराम्नायते। यद्यपि प्रथमे वाक्ये न विष्णोरुत्पत्तिराम्नायते; तथापि वियदधिकरणन्यायेनान्तराविज्ञानाधिकरणन्यायेन वा तस्यापि चतुर्मुखादीनामिवोत्पत्तिरूरीकर्तव्यैव। तत्रैकस्य कर्माधीना पराधीना चोत्पत्तिरन्यस्य स्वेच्छाधीनेति न कापि कल्पनायामस्यां विनिगमना संभवति। सति चैवं "नारायणात् ब्रह्मा जायते" इत्यादौ नारायणपदमपि तुरीयपरमेव। एतेन विष्णोरुत्पत्तिस्स्वैच्छिकी; तस्य "उदेति ह वै सर्वेभ्य पाप्मभ्यः" "अपहतपाप्मा दिव्य एको नारायणः" इत्यादिषु कर्मवश्यत्वाभावश्रवणेनोत्सर्गतः प्राप्तायाः कर्ममूलकतायाः अपोदितत्वात्। तदिदं विष्णोरवतारस्याकर्मकृतत्वं श्रुत्यैव स्पष्टीकृतम्—"अजायमानो बहुधा विजायते" इति परोक्तमपि—प्रत्याख्यातम्; "अजायमानो बहुधा विजायते" इति वाक्यं हि ब्रह्मणो न स्वरूपतः परिणामः, किन्तु प्रकृत्या एव, तस्य तु विवर्तोपादानत्वमात्रमित्येवार्थं प्रतिपादयति, नतु कार्यविष्णोरुक्तवाक्यार्थतामिति निगदव्याख्यातमिदम्।

तुरीयस्यैव पुरुषपदमुख्यार्थत्वम्

पुरुषसूक्तं हि पुरुषमधिकृत्य प्रवृत्तं कं पुरुषपदार्थं विषयीकरोतीति चर्चायामिदमस्माकं प्रतिभाति—यत् ब्रह्म-विष्णु-रुद्ररूपपादत्रयातिरिक्तं चतुष्पाद्ब्रह्मणश्चतुर्थपादरूपं तुरीयं ब्रह्मैवेति। अत एवाथर्वशिखोपनिषदि—"ओमित्येतदक्षरं ब्रह्मास्य पादाश्चत्वारः" "इत्याद्युपक्रम्य "प्रथमा (मात्रा) रक्तपीता महद्ब्रह्मदैवत्या, द्वितीया विद्युमती कृष्णा विष्णुदैवत्या, तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या, याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या" इति तुरीयपाद एव पुरुषपदं प्रयुक्तम्। अत्र द्वितीयपादे विष्णुपदप्रयोगेण तृतीयपादप्रतिपाद्याद् रुद्रादिव विष्णोरपि प्राकृतादन्यदेव स्वरूपं तुरीयं पुरुषपदार्थं इति विशदमिदं तत्त्वम्। अत्रहि ब्रह्म-विष्णु-रुद्राणां पादत्रयरूपाणां यद्यपि प्राकृतत्वं न विशदम्; तथापि "अथ यो ह खलु वावाऽस्य रजसोंऽशस्सोऽयं ब्रह्माऽथ यो ह खलु वावाऽस्य तामसोंऽशस्स रुद्रोऽथ यो ह खलु वावाऽस्य सात्विकोंऽशः स विष्णुरि" त्यादौ तदवगम्यत एव। रक्तपीतादिशब्दे राजसाद्यंशोपस्थापनेनाथर्वशिखोपनिषदि विष्णोरेव तामसत्वम्, रुद्रस्य तु सात्त्विकत्वमिति सूचितमित्यन्यदेतत्। सर्वथा तु न पुरुषपदस्वारस्यमपि पुरुषसूक्तस्य विष्णुपरत्वं उपपद्यते।

कारणवाक्येषु श्वेताश्वतरोपनिषदादौ श्रुत्यन्तरे—
नारायणपदस्येव रुद्रपदस्यापि प्रयोगः

अत एव "या ते रुद्र शिवा तनूरघोराऽपापकाशिनी" इत्यादिना शिवप्रतिपादनानन्तरम्— 'वेदाहमेतं पुरुषं महान्तमि" ति शिवेऽपि पुरुषशब्दप्रयोग उपपद्यते। श्वेताश्वतरोपनिषदि हि प्रथमद्वितीयाध्यायाभ्यां ज्ञेयब्रह्मस्वरूपं सामान्यतो निरुच्य "य एवैक उद्भवे संभवे च" इति सृष्टिसंहारकर्तृतया तृतीयेऽध्यायेऽभिन्ननिमित्तोपादानं कारणस्वरूपं शिव इति प्रतिपाद्यानन्तरमेवोक्तवाक्यप्रवृत्ते 'नात्र कारणवाक्यविवक्षे" ति पाराशर्यविजयोक्तमप्यनेन परास्तम्। एतावता विवक्षितः सारांशोऽयमेव—यत् कारणस्वरूपं सर्वशब्दवाच्यं क्वचिच्छिवपदेन क्वचिद् रुद्रपदेन क्वचित्पुरुषपदेन क्वचिन्नारायणपदेन क्वचिद् ब्र-

तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥

इत्यादीनि वचनानि, तान्यपि संहरणस्वभाव-प्रलयाधिष्ठान-परमात्मस्वरूपपराणीत्येवोरीकर्तव्यम्; अन्यथा हि "हरिर्नारायणः प्रभुरि" ति श्लोके हरिपदवैयर्थ्यमापद्येत । अत्र न केवलमुपसंहारे हरिपदेन साकं नारायणपदप्रयोगः, उपक्रमे वा "ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् । ततो वचनमीशानं प्राह वेदैर्निराकृतः" इतीशानपदप्रयोगश्च स्वरसः, किन्तु पूर्वोक्तं नराणामयनमिति निर्वचनमपीति मन्तव्यम्, यतः सृष्टिपूर्वतनैवावस्थाऽत्र वर्ण्यते । हरिपदं त्वत्र यौगिकमिति न दोषः ।

एतेन —"तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः" इति नारायणपदोपादानं रुद्रनिराकरणार्थम्; अन्यथा लक्षणापसङ्गात्" इति शङ्काऽपि—परास्ता । यत्तु "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥" इत्यानुशासनिकपर्वगतं वचनम्, तदपि—

वासुदेवं तथा विष्णुमात्मानं च तथा विदुः ।
संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्कृतः ॥

इत्यादिपूर्वतनवाक्यानुसारात् शैवादिसर्वशास्त्रप्रतिपाद्यब्रह्मतत्त्वमेव नारायणशब्द प्रतिपाद्यं गमयतीति सर्वेषामपि सम्प्रदायानामविरोधि नारायणपदमपि सामान्यशब्द इत्येव गम्यते परमात्मादिशब्दवत् । कुत्रचन ब्रह्मपदं कुत्रचन परमात्मपदं चैव क्वचन नारायणपदमपि प्रयुञ्जाना भगवद्रामानुजाचार्यपादा अपि नात्र विस्मरणमर्हन्ति ।

कठवल्ल्यादिगतविष्णुपदस्य वल्ल्यन्तरैकवाक्यतया व्या
परमात्मस्वरूपपरत्वम्, ननु पुण्डरीकाक्षपरत्वम् ।

एतेन—उपनिषदि तत्र तत्र "तद्विष्णोः परमं पदम्" इति विष्णुपदप्रयोगोऽपि—व्याख्यातः । अत्र विष्णुपदस्य योगेन व्यापकस्वरूपमेव हि विवक्ष्यते । यद्यपि कठवल्ल्यां तृतीयवल्ल्याम् —'तद्विष्णोः परमं पदमित्यनन्तः पुरुषः परः" इत्याम्नानात् पुरुषोत्तम एव विष्णुपदमतिपाद्य इति प्रतीयते; तथापि पञ्चवल्ल्यामेतत्स-

मानार्थके प्रकरणे—"इन्द्रियेभ्यः परं मनः मनसस्सत्त्वमुत्तमम्। अव्यक्तात्तु परः पुरुषः व्यापकोऽलिङ्ग एव च" इति पुरुषपदेन व्यापकमशरीरं शुद्धं चैतन्यमेव परपुरुषपदार्थतयाऽवगम्यत इति विष्णुपदेनापि व्यापकस्वरूपविवक्षैव युक्ता। एतेन—"सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्" इत्युत्तरमन्त्रे प्राप्यो विष्णुरिति स्पष्टीकृतमित्युक्तिरपि—परास्ता। मोक्षपर्वणि ३०४ तमाध्यायगतम्—कालाद्धि भगवान् विष्णुर्यस्य सर्वमिदं जगत्।" इति वाक्यमप्यत एव—व्याख्यातम्; तस्यापि कारणवाक्यत्वेन व्यापकपरमात्मस्वरूपपरत्वात्। तस्य च परमात्मनस्तमसः परत्वादौ रुद्राद्युपास्यत्वे च नास्माकमपि विप्रतिपत्तिः। शिवसहस्रनामसु "विष्णुप्रसादित" इति रुद्राख्यनारायणस्य नामान्तरमपि सांप्रतमेवोपपद्यते।

शुद्धचैतन्यस्वरूपस्य परमात्मन एव नारायणपदार्थस्य
ध्येयत्वेऽथर्वशिखोपनिषदुपष्टम्भः।

नहि विष्णुरेव पुण्डरीकाक्षादिरूपो ध्येय इत्या "लोड्य सर्वशास्त्राणी"ति वाक्यार्थः; यतोऽथर्वशिखोपनिषदि ततोऽन्य एव ध्येयतयोपसंह्रियते—"ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्शम्भुराकाशमध्ये" "शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्ये"ति। सत्यं शिवस्यापि त्रिमूर्त्यन्तर्गतस्य मात्रात्मना ध्येयस्य पूर्णेनौकारेण सामानाधिकरण्यं बाधितम्; शिवङ्करादिपदसार्थक्यार्थं तु शुद्धस्वरूपमेवात्र शिवपदार्थ इति नानुपपत्तिः। शिवङ्करपदं हि शिवपदेन शुद्धं विवक्ष्यत इति सूचनार्थत्वात् नास्मन्मते वितथम्। विष्णोरपि तु मात्रात्मना ध्येयस्योपक्षेपान् न पूर्णेनौकारेण सामानाधिकरण्यमिति न दोषः। एतेन—ईशानं प्रध्यातव्यमितीशानपदप्रयोगोऽपि—व्याख्यातः। सम्बन्धिशब्दासमभिव्याहृतो हीशानशब्दो रुद्र एव मुख्यः, नतु विष्णाविति योगार्थविवक्षायां तुरीय एव ध्येयता पर्यवस्येत् सर्वेशाने। अत एव "शब्दादेव प्रमितः" इति सूत्रेणापि परमात्मन एव सर्वेशानस्य ग्रहणं प्रतिपादितमुपपद्यते। तदिदं सिद्धम्—यत् नारायणशब्दघटितानि कारणतापराणि ध्येयतापराणि वा वाक्यान्युपनिषद्गतानि महाभारतगतानि वा नाद्वैतवादस्य, यत्र कार्य-ब्रह्म-रुद्र-विष्णूनां सर्वेषां समं प्राकृतत्वमभिप्रेयते, विरोधीनीति सूत्रकारा महाभारतकारा वा नाद्वैतवादप्रतिकूलाः।

ह्मपदेन क्वचित्सत्पदेन क्वचिच्चात्मपदेन व्यपदिश्यते श्रुतिष्विति नारायणपद-प्रयोगमात्रेण न वयं ब्रह्म-विष्णु-रुद्रेष्वन्यतमं विष्णुमेव कारणस्वरूपं ब्रह्मेति प्रतिपत्तुमर्हामः। अङ्गीकृतं हि पाराशर्यविजयकारैरपि कार्यविष्णुस्वरूपमप्य-परम्—"ईश्वराद् ज्ञानमन्विच्छेन्मुक्तिमिच्छेज्जनार्दनात्॥ "इत्यत्र ।

विश्वादिशब्दानां शिवसहस्रनामपठितानामिव विष्णुसहस्रनामगत
शंभुरुद्रादिपदानामपि तुरीयपरत्वात् न विष्णावेव
त्रिमूर्त्यन्तर्गते शिवादिपदोपपत्तिः ॥

एतेन— शिव-शम्भु-रुद्रादिशब्दानां विष्णुसहस्रनाममध्ये दर्शनाच्छिवा-दिपदमन्यत्र कारणवाक्येषु दृश्यमानं विष्णुपरं भवितुमर्हति, हरि-विष्णु-नाराय-णादिपदं तु न शिवपरं भवितुमर्हति" इति शङ्कापि—परास्ता; शिवसहस्र नामस्वपि महाभारतानुशासनिकपर्वगतेषु—"धाता शक्रश्च विष्णुश्च मित्र-स्त्वष्टा ध्रुवो धरः। विष्वक्सेनो हरिर्यज्ञः संयुगापीडवाहनः ॥" इत्यादिषु विश्वादिनाम्नामपि शिवे प्रयोगदर्शनात्। यत्तु—नारायणपदं तावन्निरवकाश-त्वाद् बलीयः, नहि नारायणपदं योगेन रूढ्या वा नारायणादन्यत्र सम्भवति; णत्वानुपपत्तेः, रूढिस्त्वर्थान्तरे न सम्भवत्येव; अनुशासनविरहात्, शिवादिश-ब्दास्तु सावकाशाः; तेषां नानार्थेष्वनुशासनात्—"शुद्धे त्रिषु शिवा क्रोष्टूयाम्" 'हरा रुद्राग्निगर्दभाः" इत्यादि परोक्तम्, इदमप्यत एव निरवकाशम्; यतो नारायणशब्दस्य भगवान् वासुदेव एव स्वयं रुद्रशब्दाभिधेये संहारकारण एव "कालोऽस्मि लोकक्षयकृत्" इत्यादिवाक्यप्रतिपाद्ये मुख्यां वृत्तिमभिदधाति महाभारत आनुशासनिकपर्वणि ३५० तमेऽध्याये नारायणशब्दनिर्वचनप्रसङ्गे, नतु शङ्खचक्रादिधारिणि चतुर्भुजे व्यक्तिविशेषे वसुदेवापत्यादौ। सति चैवम् "विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः।" 'वसुदेवोऽस्य जनक" इति कोशानुशासनमंशांशिनोरभेदमादायैव प्रवृत्तं न्यायसामान्यात् रुद्रस्यापि नारायणपदवाच्यत्वे न विरुद्धं भवतीति मन्तव्यम्। इमान्यत्रानुसन्धेयानि महा-भारतवचनानि —

"उमव्रतचरो रुद्रो योगी त्रिपुरदारणः।

दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ॥
नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे ।
तस्मिन् हि पूज्यमाने वै देवदेवे महेश्वरे ॥
संपूजितो भवेत्पार्थ देवो नारायणः प्रभुः ।
अहमादिर्हि लोकानां विश्वेषां पाण्डुनन्दन ॥
तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।
रुद्रो नारायणश्चेति तत्त्वमेकं द्विधा कृतम् ॥
नहि विष्णुः प्रणमति कस्मैचिद्विबुधाय वै ।
ऋते आत्मानमेवेति ततो रुद्रं नमाम्यहम् ॥
नराणामयनं ख्यातमहमेकः सनातनः ।
आपो नारा इति प्रोक्ताः आपो वै नरसूनवः ॥
अयनं मम ताः पूर्वमतो नारायणोऽस्म्यहम् ॥" इति ।

अत्र नारायणशब्दस्य कर्मजत्वमेव, नतु केवलरूढत्वमिति सूचनपूर्वकं रुद्रस्य प्रथमतो भगवद्वासुदेवात्मरूपस्य नारायणशब्दप्रवृत्तिनिमित्तम्—"नराणामयनं ख्यातमहम्" इति श्लोकेन निरूप्यानन्तरं स्वस्मिन्नपि नारायणशब्दप्रवृत्तिनिमित्तं पूर्वं जलाधिवासप्रयुक्तं समुल्लिख्यत इति सर्वविदितमिदम् । सति चैवं यौगिकस्य योगरूढस्य वा नारायणशब्दस्य पुण्डरीकाक्ष एव मुख्या प्रवृत्तिरिति रिक्तमिदं वचनम् । वासुदेवे हि भगवति भूतपूर्वगत्यैव नारायणशब्दप्रवृत्तिरिति खलु प्रकृतसन्दर्भाशयः । अन्यत्रापि शिवशब्दप्रयोगमात्रं न तस्य नारायणपरताव्याघातकम्, अन्यथा कपिमण्डूकादिपरस्य हरिशब्दस्यापि विष्णावप्रमुख्यैव प्रवृत्तिः कथं परिहरिष्यते ? नह्यन्यत्र प्रयोगोऽन्यार्थताविरोधी; बहुलप्रयोगेन हि केषांचन श्लिष्टानां पदानामनेकार्थत्वमपि हि न दोषाय ।

यानि मोक्षपर्वणि ३५७ तमेऽध्याये—

नारायणपरा वेदा यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥
पञ्चकारणसंख्यातो निष्ठा सर्वत्र वै हरिः ॥

अग्निपुराणगतगीतासारादीनां स्वयं बादरायणानूदितानामद्वैतमत एव निर्वाहः ।

अत एवाग्नेयपुराणे—

ब्रह्मज्ञानं प्रवक्ष्यामि संसाराज्ञानमुक्तये ।
अयमात्मा परं ब्रह्म अहमस्मीति चिन्तयेत् ॥
देह आत्मा न भवति दृश्यत्वाच्च घटादिवत् ।
प्रसुप्ते मरणे देहादात्माऽन्यो ज्ञायते ध्रुवम् ॥
चक्षुरादीन्द्रियाणि नात्मा वै करणं यतः ।
अहङ्कारोऽपि नैवात्मा देहवद्व्यभिचारतः ॥
उक्तेभ्यो व्यतिरिक्तोऽयमात्मा सर्वहृदि स्थितः ।
नित्य--शुद्ध--बुद्ध--मुक्त--सत्यमानन्दमद्वयम् ।
ब्रह्माहमस्म्यहं ब्रह्म परं ज्योतिर्विमुक्त ओम् ॥
गुरुणा बोधितो जीवो ह्यहं ब्रह्मास्मि बाह्यतः ।
मुच्यतेऽसारसंसारात् ब्रह्मज्ञो ब्रह्मविद्भवेत् ॥
अहं ब्रह्म परं ज्योतिः पृथिव्यप्यनलोज्झितम् ।
अहं ब्रह्म परं ज्योतिर्विश्व-भाव-विवर्जितम् ॥
अहं ब्रह्म परं ज्योतिः स्वप्नावस्थादिवर्जितम् ।
अहं ब्रह्म परं ज्योतिः कार्य-कारणवर्जितम् ॥
देहेन्द्रिय -- मनो -- बुद्धि -- प्राणाहङ्कारवर्जितम् ।
परमात्मा च सर्वेषामाधारः परमेश्वरः ॥
विष्णुनाम्ना च देवेषु वेदान्तेषु च गीयते ॥
वेदादिविद्या ह्यपरमक्षरं ब्रह्म सत्परम् ।
तदेतद्भगवच्छब्दवाच्य (?) मुपचारेऽर्चनेऽन्यतः ॥
प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥
तत्र विष्णोः परं रूपमरूपस्याजमक्षरम् ।
अशक्यं प्रथमं ध्यातुमतो मूर्तादि चिन्तयेत् ॥

इत्यादिनाऽद्वितीयब्रह्मस्वरूपमद्वैतविज्ञानं च प्रस्तुत्यानन्तरं गीतासारो हि य उपक्षिप्यते, सोऽयमद्वैतमेव गीतासारं प्रतिपादयति। अत्र "एकज्ञानं सात्विकं स्यात् पृथक्ज्ञानं तु राजसम्" इत्यादिना जीवब्रह्मणोरभेदज्ञानमेवोपक्षिप्यते मोक्षसाधनम्, नतु शरीरशरीरिभावादिप्रयुक्तमभेदज्ञानादिकम्। अत्र "श्रीमन्तश्चोर्जिताः सर्वे ममांशाः प्राणिनः स्मृताः" इति श्रीमतामेवांशत्वं यदुपक्षिप्तम्, तदिदं सर्वशरीरतावादस्याननुगुणमेव। एतेन—अनादिमत्परं ब्रह्मे" ति गीतावाक्यमपि—व्याख्यातम्। अत्रहि आदिराहित्यं परत्वं चैव जीवस्य बोध्यते, नतु 'मत्परमि"ति भगवदाश्रितत्वम्। तदुक्तमाग्नेये—"अनादि परमं ब्रह्म सत्यं नाम तदुच्यते।

यमगीतासारस्याप्यद्वैत एव स्वारस्यम्।

अत्र हि "पुमांश्चाधिगतज्ञानो भेदं नाप्नोति सत्तमः। ब्रह्मणा विष्णुसंज्ञेन परमेणाव्ययेन च।" इति ब्रह्मणा सह मुक्तिदशायां न भेदलेशोऽपीति यत् प्रतिपाद्यते, यच्च "घटध्वंसाद्यथाऽऽकाशमभिन्नं नभसा भवेत्। मुक्तो जीवो ब्रह्मणैवं सद् ब्रह्म ब्रह्म वै भवेत्॥" "आत्मानं मन्यते ब्रह्म जीवो ज्ञानेन नान्यथा। जीवो ह्यज्ञान-तत्कार्यमुक्तः स्यादजरामरः॥" इत्यादिना जीवस्य मुक्तौ ब्रह्मभाव एवात्यन्तिको निर्दिश्यते, उभयमिदं कठवल्या यमगीताया वा विष्णुपदघटिताया अपि भगवत्पादसम्मत एव विवरणे स्वरसं भवति। स्पष्टं हि यमगीतायां कठवल्लीगतं विष्णुपदं ब्रह्मपरम्, नतु पुण्डरीकाक्षादिरूपविष्णुपरमिति प्रतिपादितम्। तदुक्तम् 'ब्रह्मादिस्तम्बपर्यन्तं जगद्विष्णुं वदन्ति च। स विष्णुः परमं ब्रह्म यतो नावर्तते पुनः।"इति। इदं हि 'परापरस्वरूपेण विष्णुस्सर्वहृदि स्थितः', इति वर्णनानन्तरं 'यज्ञेशं यज्ञपुरुषं केचिदिच्छन्ति तत्परम्। केचिद्विष्णुं हरं केचित् केचिद् ब्रह्माणमीश्वरमि" ति मतभेदं निरूप्य सर्वमतनिरसनेन प्रवृत्तमिति विष्णुपदार्थोऽत्र परं ब्रह्मैवेति निश्चीयते। तत इदं सिद्धम्—यत् आग्नेयपुराणकाराणां बादरायणाचार्याणां महाभारतान्तर्गताया भगवद्गीताया महाभारतस्य चाऽद्वैत एव पर्यवसानमभिप्रेतमिति। अग्निपुराणे हि ब्रह्मविज्ञानप्रकरणे जीवस्यैकत्वपक्ष एव स्पष्टमुपक्षिप्तो न बहुत्वपक्ष इति महाभारतेऽपि बादरायणाचार्याणां

तदेकत्वपक्षोपक्षेप एव तात्पर्यमवगम्यते। पद्मपुराणेऽपि १७५ तमेऽध्याये गीतामाहात्म्यनिरूपणप्रसङ्गे गीतार्थतयाऽद्वैतवाद एवोपक्षिप्यते। तदुक्तं तत्रैव—"मायामयमिदं देवि वपुर्मे नतु तात्त्विकम्। सृष्टिस्थित्युपसंहारक्रियाजालोपबृंहितम्। अतोऽन्यदात्मनो रूपं द्वैताद्वैतविवर्जितम्।" "रूपमैश्वरमात्मैक्यगम्यं गीतासु कीर्तितमिति। अत्रात्मैकत्ववादस्यैवोपबृंहणादद्वैतमात्रपर्यवसानं गीताया विशदमवगम्यते।

अद्वैतवादाभिप्रेतस्यात्मैकत्वपक्षस्यैव महाभारततात्पर्यविषयत्वम्,
नतु तद्भेदपक्षस्य विशिष्टाद्वैतवादाभिमतस्य।

आत्मैकत्वव्यवस्थापनादिसन्दर्भा महाभारतान्तर्गतास्तु नाद्वैतवादिनां प्रतिकूलाः, किन्तु श्रीवैष्णवानामेव, येषां मतेऽहमर्था एवात्मानः साङ्ख्यादिमत इव नानैव मन्यन्ते। महाभारते हि शान्तिपर्वणि ३६० तमेऽध्याये पुरुषाणामेकत्वं स्वमतेन, साङ्ख्ययोगमतेन तु बहुत्वमिति "बहवः पुरुषा लोके साङ्ख्ययोगविचारणे। नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां च यथैका योनिरुच्यते। तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम्" इति प्रतिज्ञातमस्ति। अनेन चैकं चैतन्यं शुद्धमेव निर्गुणं योनिरधिष्ठानमुपहितं बिम्बं वा, तदेव च गुणत उपाधितो वा नानेति स्वरूपत एकत्वमौपाधिकं बहुत्वमिति पक्ष एव विशदीक्रियते। अत एव—

"यथा ज्ञानं तु वक्ष्यामि पुरुषं तु सनातनम्।
तस्यैकत्वं बृहत्त्वं च स चैकः पुरुषः स्मृतः॥
महापुरुषशब्दं स बिभर्त्येकः सनातनः।
एको वायुर्बहुधा वाति लोके
महोदधिश्चाम्भसां योनिरेका।
पुरुषश्चैको निर्गुणो विश्वरूपः
तं निर्गुणं पुरुषं चाविशन्ति॥"

इत्यादिवचनान्युपपद्यन्ते। अत्र निर्गुणस्यैव व्यापकत्वमेकत्वमिति वर्णनेनात्मनो बहुत्वमर्थत औपाधिकं जानीमः। अत एवाग्निवाय्वादिदृष्टान्तोऽप्युपप-

द्यते । आत्मैकत्वपक्षस्य चात्रानूदितस्य बादरायणाभिमतस्य नाद्वैतमतातिरिक्ते निर्वाह इति न श्रीभाष्याभिमतात्मबहुत्ववादादयः सूत्रकाराभिप्रेता इति सिद्धम् ।

महाभारत आत्मबहुत्ववाद एव व्यवस्थापित इति परमतानुपपत्तिः ।

एतेन – द्वितीयप्रश्नस्यात्मबहुत्वपक्षीयतया तत्प्रतिवचनभूतः कृत्स्नोऽपि सन्दर्भ आत्मबहुत्वविषय एवेति निश्चीयते । इत्थं चैकात्म्यमत्र नात्मैक्यरूपम्, किन्त्वेकात्मविशिष्टत्वमित्यादिपरोक्तिरपि प्रत्युक्ता । योनित्वं ह्यत्र सूत्रकाराभिमतमुपादानत्वरूपमेवेत्यत्र तु न विप्रतिपत्तिः, तत्तु विवर्तोपादानत्वरूपमित्यद्वैतमतम्, इतरेषां तु परिणममानप्रकृतिशरीरकत्वमिति त्वन्यदेतत् । वस्तुतस्तु— एकत्वनिर्गुणत्वयोरात्मन उपक्षेपेणैवोपादानत्वमिदं विवर्तोपादानत्वरूपमेवेति पर्यवस्यति । अत एवानुशासनिक पर्वणि १६५ तमेऽध्याये—'ज्ञाते तु यस्मिन् ज्ञातव्यं ज्ञातं भवति भारत ।" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय "निस्तत्त्वश्चैव देवेशो बोद्धव्यं तु न बुद्ध्यते । यदि बुद्ध्येत् परं बुद्धं बुद्ध्यमानः सुरर्षभ । प्रबुद्धो ह्यभिमन्येत योऽयं नाहमिति प्रभो ।" इति प्रकृतिवियुक्तस्यैव ज्ञेयत्वप्रतिपादनम्, साक्षात्कारसमनन्तरमहम्भावविमोकश्च प्रतिपाद्यमान उपपद्यते ।

पाञ्चरात्रसिद्धान्तस्यैव बादरायणाभिमतत्वनिरासः ।

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥
साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥
पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥
यथाऽऽगमं यथाज्ञानं निष्ठा नारायणः प्रभुः ॥

इत्यादिमोक्षपर्वगतानि तु वचनानि सर्वेषां साङ्ख्यादीनां महर्षिकपिलादि-प्रवर्तितानां निर्गुणे चैतन्ये न विरोध इत्युपपादनपराणीत्येव प्रतीयते, नतु पाञ्चरात्रमतस्यैव द्वैपायनाभिप्रेतत्वप्रतिपादनपराणि ।

साङ्ख्ययोगाभ्यामेव वेदस्यैकवाक्यता, नतु पाञ्चरात्रमतेनेति व्यवस्था ।

सर्वसम्प्रतिपन्नमिदम्—यत् तुरीयनारायणः तुरीयः सदाशिव एव वा सर्वशास्त्रतात्पर्यविषय इति । तस्य केवलनिमित्तकारणत्वमभिन्ननिमित्तोपादानत्वम्, तदपि स्वरूपतो ब्रह्मण एवोपादानत्वेन, मायाया एवोपादानत्वेनेत्यादि-विशेषास्तु तत्तच्छास्त्रकारविप्रतिपन्ना बहवो वर्तन्त इति त्वन्यदेतत् । तत्र पाशुपतपाञ्चरात्रमतयोः केवलनिमित्तत्वाभिन्ननिमित्तोपादानत्वकृते सत्यपि विशेषे तुरीयस्य सगुणत्वे स्वरूपतोऽनुपादानत्वे च साम्यमेव । द्वैपायनाचार्यस्तु तुरीयस्य जीवस्य वा निर्गुणत्वासङ्गत्वादिपक्षमेव वैदिकं मतमिति कथञ्चनैकवाक्यता वैदिकमतस्य साङ्ख्ययोगाभ्यामेव भवति, नतु पाशुपतपाञ्चरात्राभ्यामिति स्पष्टमस्मिन्नेव प्रकरणे —

साङ्ख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैस्समस्तैः ऋषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम् ।

इत्युपसंहारेण सूचयन्ति ; अन्यथा कथमत्र पाञ्चरात्रस्यापि वेदैकवाक्यता नोल्लिखितेति सर्वे एवं विभावयन्तु ।

"पुरीकृत्यमुकथान्" इत्यत्र पुरुषपदार्थो न स्वतन्त्रेश्वरः, किन्तु प्रत्यगात्मैव ।

विचारावसरे हि व्यवहारसिद्धजीवभेदादिकमादायैव शास्त्रार्थव्यवस्था-पनस्य युक्तत्वात् यावद्ब्रह्मसाक्षात्कारं जीवस्य प्रकृतिसंसर्गकृतं कर्तृ-त्वादिकमित्यादिप्रक्रियावलम्बनेन वैदिकमतव्यवस्था, मुक्तिदशायां यत्र सर्वात्मभावो "नारायणो विश्वमिदं पुराणम्" इति वाक्यसिद्धो भवति, तत्र केवलस्य वैदिकस्य मतस्य प्रतिष्ठा । तदुक्तं मोक्षधर्मे— "अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते । एकश्चरति क्षेत्रेषु स्वैरचारी यथा-

सुखम्। क्षेत्राणि च शरीराणि बीजं चापि शुभाशुभम्। तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते। साङ्ख्येन विधिना चैव योगेन च यथाक्रमम्। चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तराम्।" इति। अत्रहि पुरुषस्य सर्वगत्व-मेकत्वं च स्पष्टमुच्यमानमद्वैतमत एव निर्वहति, न विशिष्टाद्वैतमते। पुरुषो ह्यत्र निर्दिश्यमानः प्रत्यगात्मैव, न नारायण इति "तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते।" इति वाक्येनैवावगम्यते। नहि परमात्मा क्षेत्रादिविज्ञानेन श्रीभाष्य-मते क्षेत्रज्ञः, किन्तु क्षेत्रज्ञशरीरकत्वेनेति सर्वविदितमिदम्। तथाच जीवा-नां बहूनामौपाधिकानामधिष्ठानं ब्रह्माभेदार्हं प्रत्यगात्मस्वरूपमेवात्र पुरुषपदार्थ इति "एको हुताशो बहुधा समिध्यते" इत्याद्युपसंहारेणापि गम्यते। नहि श्रीभाष्यमते एकस्यैव परमात्मन औपाधिकं बहुत्वं स्वरूपत एकत्वमिति सिद्धा-न्तसंभवः। स्पष्टं हि व्यासाचार्याः—समासेन तु यद् व्यासः पुरुषैकत्वमुक्तवा-नि"ति एकात्मवादमेव स्वमतं प्रतिपादयन्ति। "यत्तु—पुरुषैकत्वमुक्तवानि"त्यस्य निरुपाधिकस्य पुरुषस्यैकत्वमुक्तवानिति परेषां विवरणम्, तत्र न केवलमध्या-हारादिदोषाः, किन्तु ब्रह्मबहुत्वशङ्काया एवाभावादनवसरोक्तिरपि। एतेन— "तस्यैकस्य महत्वं हि स चैकः पुरुषः स्मृतः" इत्यत्रैकस्य महत्ववर्णनात् तदन्येषां महत्वव्यावर्तनमिति परोक्तिरपि—व्याख्याता; नह्यद्वैतवादेऽपि पुरुषाणा-मौपाधिकानां व्यापकत्वमिति सिद्धान्त इति पुरुषाणामौपाधिकानां भेदव्यवस्थापन-परतयोक्तवचनतात्पर्यमूरीकर्तव्यम्। नहि श्रीभाष्यमते औपाधिकाः पुरुषाः बहु-वो मताः, यत्राणूनां जीवानां स्वस्वभावसिद्धानां स्वत एव नानात्वमिति न कोऽपि दोषः। अधिकं च प्रसङ्गान्तरे निरूपयिष्यते। चैतन्यैकत्वतदुपादानत्वसाध-नेन हि साङ्ख्ययोगयोरेव वैदिकमते निष्ठेति बादरायणाचार्या मन्यन्ते। अत एव प्रकृतिपरिणामितानिरासार्थमेव ब्रह्ममीमांसायां बादरायणाचार्याः प्रवर्त-न्ते। "एतेन योगः प्रत्युक्त" इति हि चेतनाधिष्ठितप्रकृतिपरिणामवादोऽपि खण्डित इति सर्वसम्मतमिदम्।

कर्तृदोषेण साङ्ख्यादीनां नाप्रामाण्यम्, किन्तु विषयबाधेनैव, स च पाञ्चरात्रेऽप्यविशिष्ट ।

साङ्ख्ययोगादिनिरासो हि बादरायणाचार्यैः कर्तृरजस्तमोऽभिभूतत्वसं-

भावनया न क्रियते, किन्तु प्रकृतिपरिणामितामात्रेण तन्मात्रोपादानताऽसंभवे-नैव। इयमेव रीतिः "पत्युरसामञ्जस्यादि" त्यादावपि द्रष्टव्या। नहि तत्रापि कर्तृदोषेणाप्रामाण्यमुपवर्णितम्। एतेन पुराणानां केषांचन तामसत्वेनाप्रा-माण्यशङ्कापि–प्रत्युक्ता। पुराणकर्तुर्वेदव्यासस्य तामसत्वे हि सर्वेषामपि पुराणानामप्रामाण्यमापद्येत। पुराणादिप्रामाण्यं हि न कर्तुस्सात्त्विकत्वेन, किन्तु वेदमूलकत्वेनेति तु निष्कर्षः।

पाञ्चरात्रप्रामाण्यस्य बादरायणानभिप्रेतत्वम्।

एतेन – अब्रह्मात्मकप्रकृतिपरिणामवादनिरासार्थं योगप्रत्युक्त्यधिक-रणमिति वादोऽपि—परास्तः। नहि कुत्रापि सूत्रे सूत्रकाराः ब्रह्मा-त्मकप्रकृतिपरिणामवादं सूत्रयन्ति ब्रह्ममीमांसायामुपपादयन्ति वा महा-भारतादौ। पाञ्चरात्रेऽपितु ब्रह्मात्मकप्रकृतिपरिणामतावादो नोल्लि-खित इति तु वस्तुस्थितिरिति निर्मूल एवायं ब्रह्मात्मकप्रकृतिपरिणा-मतावादः। शरीरपरिणाममात्रेण शरीरिणोऽपि परिणामितयोपादानत्वविव-क्षायां तु पाशुपतमतात्को वा विशेषः पाञ्चरात्रमतस्येति भवन्त एव विवेचयन्तु। शरीरशरीरिभावो ह्यन्तर्यामिब्राह्मणसिद्धो न पाशुपतानामपि विरुद्धः। अतएव ब्रह्माभिन्न निमित्तोपादनत्वेनैव श्रीकण्ठ भाष्यम्। सर्वथातु केवल ब्रह्मा-नुपादानतावादः साङ्ख्य-योग-पाशुपत-पाञ्चरात्राभिमतो बादरायणाचा-र्यानभिमत इत्येव तत्त्वम्। अत एव—वैदिकमतात्पृथक् पाञ्चरात्रस्य निर्देश उपपद्यते। इदमेवाभिप्रेत्य ब्रह्ममीमांसाद्वितीयाध्याये साङ्ख्य-योगयोः प्रधानकारणतांशं इव पाशुपतपाञ्चरात्रयोरपि केवलनिमित्तकारणत्व-जीवोत्पत्त्यादिविषयांशेऽप्रामाण्यमेव सूत्रकाराः सूचयन्तीति भगवत्पादानामेव भाष्यं सूत्रकाराशयानुरोधि।

पाञ्चरात्रप्रामाण्ये बादरायणाचार्याशयः।

पाञ्चरात्रप्रामाण्यविषये च महाभारतस्य ब्रह्मसूत्राणां चैकवाक्यतोत भिन्नवाक्यतेति प्रथममालोचनीयम्। तत्र च मोक्षधर्मे ३४३ तमेऽध्याये उपरि-चरवसुपवर्तितत्वेन वर्णितमत्र्यादिसप्तर्षिप्रणीतं यत् पाञ्चरात्रम्, तत्र हिंसादोषत्व-

निबन्धनं पिष्टपशुयागस्यैव विधिरिति गम्यते। तस्य च ब्रह्मसूत्रेषु स्पष्टमेव—"अशुद्धमिति चेन्न शब्दात्" इति सूत्रेण श्रीभाष्यमतरीत्याप्यधर्मत्वं स्थाप्यत एव यज्ञीयहिंसाया अदोषत्वव्यवस्थापनद्वारेति तदंशे भिन्नवाक्यतैवोभयोरित्यत्र न विप्रतिपत्तिलेशोऽपि। सति चैवं श्रीभाष्यमतानुयायिभिरप्यस्मिन्नंशे पाञ्चरात्रस्य प्रामाण्यं न बादरायणाचार्यानुमतमूरीकर्तुं शक्यते। अस्मिन् हि प्रकरणे—"संस्थिते तु नृपे तस्मिन् शास्त्रमेतत्सनातनम्। अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया" इति पिष्टपशुयागाचारो बृहस्पतिप्रेरणयोपरिचरवसुकृतोऽपि तच्छास्त्रेण साकं तदनन्तरमन्तर्धानं प्राप्स्यतीति वर्णनात् वेदविरुद्धांशाः पाञ्चरात्रगता अप्रमाणमेवेति सूच्यते। भक्त्यादिसाधनांशे तु वेदाविरुद्धे नास्त्यप्रमाण्यशङ्कापि,यतो नात्र भक्तेरन्तर्धानमुपक्षिप्तम्। तथाच यथा श्रीभाष्यकाराः पाञ्चरात्राधिकरणे पाशुपतशास्त्राणामपि पशुपत्यंशे प्रामाण्येऽपि तन्निमित्तनामात्रेऽप्रामाण्यं मन्यन्ते, एवं पाञ्चरात्रशास्त्रस्यापि जीवोत्पत्त्याद्यंशेऽप्रामाण्यव्यवस्था सूत्रकारैः सूच्यते। "तस्मात् प्रवक्ष्यते धर्मान् मनुः स्वायंभुवः स्वयम्। उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः। तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम्।" इति मनुना महाभारताभिमता धर्मा वक्ष्यन्ते, पाञ्चरात्राभिमतास्तु शुक्रबृहस्पतिभ्यामिति वर्णनात् धर्मांशे मनुमतमेव स्वमतं सूचयन्ति व्यासाचार्याः। अनेन विज्ञायते—यत् वेदविरुद्धांशाः न केवलं जीवोत्पत्तिवादादयः, किन्तु धर्मा अपि केचन पाञ्चरात्रेषु वर्तन्त इति। यत्तु—"एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च। परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते। एष एकान्तिनां धर्मो नारायणपरात्मकः।" इति वचनम्, तदिदमपि नीलकण्ठभाष्यसमालोचने भक्तिमार्गमात्रेणैव वेदैनैकवाक्यतां पाञ्चरात्रस्य गमयतीति जीवोत्पत्तिवादादयो न बादरायणाभिमता इति विज्ञायते।

पाञ्चरात्राधिकरणस्य तदप्रामाण्यसाधनार्थमेव प्रवृत्तिः,
नतु तत्प्रामाण्यसमर्थनार्थम्।

"तदा विशति यो ब्रह्मन्नदृश्यो लघुविक्रमः।
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः॥

स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः ।
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ॥
तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च ।
सोऽनिरुद्धस्स ईशानोऽव्यक्तः स सर्वकर्मसु ॥
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयस्स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ॥
संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहंकारस्स ईश्वरः ॥''

इति हि स्पष्टमेव वासुदेवात्संकर्षणादीनामुत्पत्तिरभिधीयमाना न सूत्रकाराभिमतेत्यत्र तु न विप्रतिपत्तिः । गौणी व्युत्पत्तिरत्र संकर्षणादीनां मन्यत इति कल्पना तु न संभवति, प्रमाणाभावात् । ''न च कर्तुः करणमि''ति जीवात् संकर्षणात्प्रद्युम्नोत्पत्तिः, प्रद्युम्नाद्वाऽनिरुद्धोत्पत्तिरप्यसंभाव्यमानतयोपपाद्यमाना केन वा सूत्रेण सूत्रकारैः समर्थ्यते ? ''विज्ञानादिभावे वा तदप्रतिषेधः'' इति सत्यं ब्रह्मभावेन संकर्षणादीनामुत्पत्त्यसंभवः प्रतिपाद्यते, क्रमानुपपत्तिस्तु न परिहृता केनापि सूत्रेणेति कथं वा ''विज्ञानादिभावे वा तदप्रतिषेधः'' इति सिद्धान्तसूत्रम् ? विज्ञानादिभावेन सत्यमुत्पत्तिप्रतिषेधः संभवति, क्रमनिषेधस्तु न संभवति । तथा च क्रमिकोत्पत्तिनिषेधो ब्रह्मभावेऽपि न संभवतीत्येव तदप्रतिषेधशब्दार्थः । एतेन—विज्ञानादिभावे हि विना क्लेशमुत्पत्तिप्रतिषेधः संभवतीति विज्ञानादिभावस्योत्पत्त्यसंभवनिषेधहेतुत्वं बाधितमिति शङ्कापि—परास्ता ; क्रमिकोत्पत्तिनिषेधाभिप्रायत्वादस्य वाक्यस्य । इदमेवाभिप्रेत्य भगवत्पादैः—''न हि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति, संकर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य ; अतिशयाभावात्'' इति भाषितम् ।

विज्ञानादिभावस्योत्पत्तिनिषेधार्थत्वेनानुसन्धानं
जीवानामुत्पत्तिपरत्व प्रयोगपद्यते ।

उत्पत्तिनिषेधार्थं विज्ञानादिभावो हि पाञ्चरात्रदृष्ट्यैवानुसन्धीयत

इति सर्वसम्मतमिदम्। तत्र चेदमेव पृच्छ्यते—यत्किमिति विज्ञानादिभावोऽत्रानुसन्धेय इति? जीवत्वेन संकर्षणादीनामुत्पत्तिनिषेधासम्भवं मत्वैव विज्ञानभावोऽत्र हेतुतया निर्दिष्ट इति यदि मन्यते, तर्हि ब्रह्मव्यतिरिक्तानां जीवानामप्युत्पत्तिवाद एव पाञ्चरात्राभिमत इति खलु पर्यवस्यति। जीवोत्पत्तिवादश्च बादरायणाचार्यानभिप्रेत इति नेदं कस्यापि विप्रतिपन्नम्। सति चैवं पाञ्चरात्राप्रामाण्यव्यवस्थापनार्थमेवेदं सूत्रमधिकरणं वा,न तत्प्रामाण्यसमर्थनार्थमिति सुष्ठु समर्थितमेतत्—यत् द्वितीयाध्यायद्वितीयपादनिरत्यपाञ्चरात्रप्रामाण्यपरं श्रीभाष्यं न सूत्राशयानुसारीति। अयं भावः—"यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः। ज्ञेयस्स एव राजेन्द्र जीवः संकर्षणः प्रभुः" इति इति सत्यं संकर्षणस्य वासुदेवात्मत्वं प्रतिपाद्यते; प्रद्युम्नादीनां तु न वासुदेवभावः प्रतिपाद्यते; अन्यथा वासुदेवादेव सर्वोत्पत्तिवादस्यावश्यकत्वात् संकर्षणादितः प्रद्युम्नादिभावोऽनुपपन्न एव स्यात्। "उत्पत्त्यसंभवात्"इति तु पाञ्चरात्राप्रामाण्यसाधनपरमिति सर्वसम्मतमिदम्। यदि पाञ्चरात्रे उत्पत्तिरेव न निर्दिष्टा, तर्हि कथमुत्पत्त्यसंभवोऽप्रामाण्यहेतुः स्यात्?

पाञ्चरात्रस्यापि पौरुषेयत्वेन वेदविरोधेऽप्रामाण्योपपत्तिः।

महाभारते हि—"साङ्ख्यं योगः पाशुपतमि"त्यादौ साङ्ख्ययोगादीनामिव पाञ्चरात्रस्यापि पौरुषेयत्वमेव मन्यते। इयान् विशेषः—यत् सांख्ययोगादिकं महर्षिकपिलादिप्रवर्तितम्, पाञ्चरात्रं तु भगवता वासुदेवेन प्रवर्तितं स्वतन्त्रमिति। स्वातन्त्र्यं हि वेदेषु भगवतोऽपि नास्तीति तत एव व्यक्तमिति न वेदसमानयोगक्षेमं पाञ्चरात्रप्रामाण्यमित्येव व्यासाचार्या मन्यन्ते। तथाच वेदविरुद्धांशे साङ्ख्यादीनामिव पाञ्चरात्रस्याप्यप्रामाण्यमेव ब्रह्ममीमांसावसेयम्। नहि वेदनिन्दांशेऽपि पाञ्चरात्रप्रामाण्यसंभवः। "नहि निन्दा"न्यायेन वेदनिन्दायोजनं तु पाञ्चरात्रप्रामाण्यसिद्धावेव सम्भवति, न विपरीते। नहि विशेषतः स्तुतिमात्रेण पाञ्चरात्राप्रामाण्यासम्भवः, अन्यथा साङ्ख्ययोगयोरपि विशेषतः स्तुतयोः प्रामाण्यापत्त्या साङ्ख्यमतनिरासोऽनुपपन्नः स्यात्। "विप्रतिषेधाच" इति विप्रतिषेधशब्दो हि व्याघातार्थकोऽप्रामाण्यहेतुरेव "विप्रतिषेधाच्चासमञ्जसम्"

इत्यादौ प्रयुज्यत इति कथमकस्मादत्र परं केवलनिषेधार्थकत्वं तस्य श्रीभाष्या-भिमतं युक्तम् ? एतेन—"पाञ्चरात्रस्य प्रामाण्यमुत्कर्षं च प्रशंसति सूत्रकार" इति परिभाषाभूमिकाविमर्शोक्तिरपि—प्रत्युक्ता ।

भगवत्पादादीनां पाञ्चरात्राप्रामाण्यमतसङ्ग्रहः ।

श्रीभाष्यकाराः श्रुतप्रकाशिकाकारा वा अविरोधसमर्थनावसरे जीवो-त्पत्तौ संकर्षणादीनां जीवादिभावेन व्यपदेशे च सत्यं काश्चन काश्चनोपपत्तीः संगृह्णन्ति, क्रमानुपपत्तौ तु "नच कर्तुः करणम्" इति सूत्रतद्भाष्यादिप्रतिपादि-तायां तूष्णीम्भावमेव प्रतिपद्यन्ते । स्पष्टं ह्यत्र भगवत्पादाः पाञ्चरात्राप्रामाण्यं स्वशब्देनैव समर्थयन्तीति नात्राधिकं किमपि वक्तव्यं पश्यामः । सति चैवं भग-वत्पादमतानुयायिनामपि पाञ्चरात्रप्रामाण्यनिषेधे न तात्पर्यमिति विमर्शोक्ति-मपि छिन्नमूलमिति सूचितम् ।

परिभाषाविमर्शाभिमतभामतीकल्पतर्वादीनां पाञ्चरात्रप्रामाण्यसमर्थनविरोधिता

इदमेवात्र विमर्शकारा अपि मन्यन्ते—"यत् सत्यं भगवत्पादाः पाञ्चरात्रस्यांशविशेषेऽप्रामाण्यपरतयैवोक्तमधिकरणं योजयन्ति, परन्तु तद्व्याख्यातारो भामतीकल्पतरुकारादयः ब्रह्मसूत्रवृत्तिकाराः साक्षाद्भग-वत्पादान्तेवासिनो वार्तिककारादय नात्र हृदयतः पाञ्चरात्राप्रामाण्यं सहन्ते" इति । इदमेवात्रालोचनीयम्—यत्कियदवधि विमर्शनमिदं विकल्पसहं भवतीति । तत्रेयं विमर्शसंगृहीता भामती—"अन्यत्र वेदाविसंवादात् यत्रांशे विसंवादः स निरस्यत" इति, या जीवोत्पत्तिवादः पाञ्चरात्राभिमतः सूत्रकारासम्मत इत्येव गमयति । "अधिष्ठातैवेश्वर इति मते निरस्ते प्रकृतिरपि स इति मतस्य वेद-सङ्गतार्थत्वाज्जीवोत्पत्तावपि प्रमाणत्वं स्यादि"ति कल्पतरुग्रन्थोऽपि जीवोत्पत्ति-वादः पाञ्चरात्राभिमतोऽप्रमाणसिद्ध इति विशदयति । अयं हि कल्पतरुग्रन्थो ब्रह्मण एव स्वरूपतः प्रकृतित्वमिति पाञ्चरात्रसिद्धान्त इति सूचनेन चिदचि-च्छरीरकब्रह्मकारणतावादं श्रीभाष्याभिमतं स्वमूलप्रमाणपाञ्चरात्रासिद्धं गमयतीति त्वन्यदेतत् । सत्यं विमर्शसंगृहीतेन—"प्रमाणापहृतविषये गौणं तद्वचनमि" ति तु कल्पतरुग्रन्थेन कल्पतरुकारा गौणोत्पत्तिवादपरत्वेन

पाञ्चरात्रप्रामाण्यसमर्थनमभिप्रयन्ति । एवमभिप्रयन्तोऽपि ते "संकर्षणात्प्रद्युम्नो जायत इति" क्रमिकोत्पत्तिवादासम्भवग्रन्थं तु भामतीकाराणां यथावदेवानुवदन्तीति नूनमत्र विरोधोऽपि प्रतीयते । सति च विरोधे कल्पतरुकाराणामिदमेव मतं प्रतीमः—यत् ध्रुवं पाञ्चरात्रस्य भगवत्प्रणीतस्य कथञ्चित्प्रामाण्यसंरक्षणमस्माभिरस्मन्मताविरोधेन कर्तुं शक्यते, परन्तु नेदं शाण्डिल्यादीनां संकर्षणादिक्रमिकोत्पत्तिवादिनामभिप्रेतमिति, तदप्रामाण्यसाधनार्थमुत्पत्त्यसंभवाधिकरणमिति । नहि विमर्शकारा अन्ये वा कल्पतरुकाराणां भाष्यभामत्याद्यविरोधेन श्रीभाष्यकाराणामिव पाञ्चरात्रप्रामाण्यसमर्थनपरतयैवोक्तमधिकरणं योजयितुमीशते । "वेदविप्रतिषेधो व्याख्यातः" इति भामतीग्रन्थः कल्पतरौ "भाष्ये" इति शेषपूरणेन व्याख्यातः" इति भाष्यकारोपक्षिप्तं वेदनिन्दादिकं शाण्डिल्यादिप्रवर्तिते पाञ्चरात्रे विद्यमानं ततस्तदप्रामाण्यमेव च कल्पतरुकारा अपि मन्यन्ते । एतेन—विमर्शकाराणां कल्पतरुग्रन्थानुसारेण भगवत्पादमतेऽपि सर्वथा पाञ्चरात्रप्रामाण्यसमर्थनं साहसमूलमिति – सूचितम् ।

पाञ्चरात्रगतजीवोत्पत्तिवादस्य गौणत्वायोगः ।

पाञ्चरात्रमूलकं श्रीभाष्यमित्यनेन भूमिकावाक्येन न जीवोत्पत्तिवादोऽपि श्रीभाष्यकाराभिप्रेत इति विवक्षितम्, येन जीवोत्पत्तिवादः श्रीमद्रामानुजाभिप्रेत इति न केनापि वक्तुं शक्यत इति विमर्शोक्तीनामवसरः स्यात्, किन्तु बादरायणनिरस्यपाञ्चरात्रप्रामाण्यपरत्वान्न तद्भाष्यं बादरायणाशयानुसारीति । वस्तुतस्तु –"विज्ञानादिभावे वे"ति संकर्षणादीनां ब्रह्मभावेन गौणोत्पत्तिसमर्थनेन हि संकर्षणाद्यतिरिक्तानां स्वरूपतो ब्रह्मव्यतिरिक्तानां जीवानामुत्पत्तिवाद एव श्रीमद्रामानुजाचार्यैरपि समर्थनीयः ; अन्यथा जीवानां जीवत्वेनापि गौण्या एवोत्पत्तेः स्वीकारात् "विज्ञानभावे वे"ति ब्रह्मभावानुसन्धानं वितथमेव स्यात् । न हीदं सूत्रं संकर्षणादिव्यतिरिक्तानां कर्मवशानां जीवानामपि विज्ञानादिभावेन गौणोत्पत्तिसमर्थनपरं भवितुमर्हति । न हि श्रीभाष्यकाराः पाञ्चरात्रकारा वा संकर्षणादीनामिव कर्मवशानामपि जीवानां मुक्तावपि ब्रह्मभावमूरीकुर्वन्ति । भगवत्पादमते तु यत्रौपाधिकी जीवोत्पत्तिः, स्वरूपतस्तु ब्रह्मभावेन

इत्यादौ प्रयुज्यत इति कथमकस्मादत्र परं केवलनिषेधार्थकत्वं तस्य श्रीभाष्याभिमतं युक्तम् ? एतेन—"पाञ्चरात्रस्य प्रामाण्यमुत्कर्षं च प्रशंसति सूत्रकार" इति परिभाषाभूमिकाविमर्शोक्तिरपि—प्रत्युक्ता ।

भगवत्पादादीनां पाञ्चरात्राप्रामाण्यमतसङ्ग्रहः ।

श्रीभाष्यकाराः श्रुतप्रकाशिकाकारा वा अविरोधसमर्थनावसरे जीवोत्पत्तौ संकर्षणादीनां जीवादिभावेन व्यपदेशे च सत्यं काश्चन काश्चनोपपत्तीः संगृह्णन्ति, क्रमानुपपत्तौ तु "न च कर्तुः करणम्" इति सूत्रतद्भाष्यादिप्रतिपादितायां तूष्णीम्भावमेव प्रतिपद्यन्ते । स्पष्टं ह्यत्र भगवत्पादाः पाञ्चरात्राप्रामाण्यं स्वशब्देनैव समर्थयन्तीति नात्राधिकं किमपि वक्तव्यं पश्यामः । सति चैवं भगवत्पादमतानुयायिनामपि पाञ्चरात्रप्रामाण्यनिषेधे न तात्पर्यमिति विमर्शोक्तमपि छिन्नमूलमिति सूचितम् ।

परिभाषाविमर्शाभिमतभामतीकल्पतर्वादीनां पाञ्चरात्रप्रामाण्यसमर्थनविरोधिता

इदमेवात्र विमर्शकारा अपि मन्यन्ते—"यत् सत्यं भगवत्पादाः पाञ्चरात्रस्यांशविशेषेऽप्रामाण्यपरतयैवोक्तमधिकरणं योजयन्ति, परन्तु तद्व्याख्यातारो भामतीकल्पतरुकारादयः ब्रह्मसूत्रवृत्तिकाराः साक्षाद्भगवत्पादान्तेवासिनो वार्तिककाराश्च नात्र हृदयतः पाञ्चरात्राप्रामाण्यं सहन्ते" इति । इदमेवात्रालोचनीयम्—यत्किमाद्यपि विमर्शनमिदं विकल्पसहं भवतीति । तत्रेयं विमर्शसंगृहीता भामती—"अन्यत्र वेदाविसंवादात् यत्रांशे विसंवादः स निरस्यते" इति, या जीवोत्पत्तिवादः पाञ्चरात्राभिमतः सूत्रकारासम्मत इत्येव गमयति । "अधिष्ठातैवेश्वर इति मते निरस्ते प्रकृतिरपि स इति मतस्य वेदसङ्गतार्थस्याजीवोत्पत्तावपि प्रमाणत्वं स्यादि"ति कल्पतरुग्रन्थोऽपि जीवोत्पत्तिवादः पाञ्चरात्राभिमतोऽप्रमाणसिद्ध इति विशदयति । अयं हि कल्पतरुग्रन्थो ब्रह्मण एव स्वरूपतः प्रकृतित्वमिति पाञ्चरात्रसिद्धान्त इति सूचनेन चिदचिच्छरीरकब्रह्मकारणतावादं श्रीभाष्याभिमतं स्वमूलप्रमाणपाञ्चरात्रासिद्धं गमयतीति त्वन्यदेतत् । सत्यं विमर्शसंगृहीतेन —"प्रमाणापहृतविषये गौणं तज्जननमि" ति तु कल्पतरुग्रन्थेन कल्पतरुकारा गौणोत्पत्तिवादपरत्वेन

पाञ्चरात्रप्रामाण्यसमर्थनमभिप्रयन्ति। एवमभिप्रयन्तोऽपि ते "संकर्षणात्प्रद्युम्नो जायत इति" क्रमिकोत्पत्तिवादासम्भवग्रन्थं तु भामतीकाराणां यथावदेवानुवदन्तीति नूनमत्र विरोधोऽपि प्रतीयते। सति च विरोधे कल्पतरुकाराणामिदमेव मतं प्रतीमः—यत् ध्रुवं पाञ्चरात्रस्य भगवत्प्रणीतस्य कथञ्चित्प्रामाण्यसंरक्षणमस्माभिरस्मन्मताविरोधेन कर्तुं शक्यते, परन्तु नेदं शाण्डिल्यादीनां संकर्षणादिक्रमिकोत्पत्तिवादिनामभिप्रेतमिति, तदप्रामाण्यसाधनार्थमुत्पत्त्यसंभवाधिकरणमिति। नहि विमर्शकारा अन्ये वा कल्पतरुकाराणां भाष्यभामत्याद्यविरोधेन श्रीभाष्यकाराणामिव पाञ्चरात्रप्रामाण्यसमर्थनपरतयैवोक्तमधिकरणं योजयितुमीशते। "वेदविप्रतिषेधो व्याख्यातः" इति भामतीग्रन्थः कल्पतरौ "भाष्ये" इति शेषपूरणेन व्याख्यातः" इति भाष्यकारोपक्षिप्तं वेदनिन्दादिकं शाण्डिल्यादिप्रवर्तिते पाञ्चरात्रे विद्यमानं ततस्तदप्रामाण्यमेव च कल्पतरुकारा अपि मन्यन्ते। एतेन—विमर्शकाराणां कल्पतरुग्रन्थानुसारेण भगवत्पादमतेऽपि सर्वथा पाञ्चरात्रप्रामाण्यसमर्थनं साहसमूलमिति - सूचितम्।

पाञ्चरात्रगतजीवोत्पत्तिवादस्य गौणत्वायोगः।

पाञ्चरात्रमूलकं श्रीभाष्यमित्यनेन भूमिकावाक्येन न जीवोत्पत्तिवादोऽपि श्रीभाष्यकाराभिप्रेत इति विवक्षितम्, येन जीवोत्पत्तिवादः श्रीमद्रामानुजाभिप्रेत इति न केनापि वक्तुं शक्यत इति विमर्शोक्तीनामवसरः स्यात्, किन्तु बादरायणनिरस्यपाञ्चरात्रप्रामाण्यपरत्वान्न तद्भाष्यं बादरायणाशयानुसारीति। वस्तुतस्तु—"विज्ञानादिभावे वे"ति संकर्षणादीनां ब्रह्मभावेन गौणोत्पत्तिसमर्थनेन हि संकर्षणाद्यतिरिक्तानां स्वरूपतो ब्रह्मव्यतिरिक्तानां जीवानामुत्पत्तिवाद एव श्रीमद्रामानुजाचार्यैरपि समर्थनीयः; *अन्यथा जीवानां जीवत्वेनापि* गौण्या एवोत्पत्तेः स्वीकारात् "विज्ञानभावे वे"ति ब्रह्मभावानुसन्धानं वितथमेव स्यात्। न हीदं सूत्रं संकर्षणादिव्यतिरिक्तानां कर्मवशानां जीवानामपि विज्ञानादिभावेन गौणोत्पत्तिसमर्थनपरं भवितुमर्हति। न हि श्रीभाष्यकाराः पाञ्चरात्रकारा वा संकर्षणादीनामिव कर्मवशानामपि जीवानां मुक्तावपि ब्रह्मभावमूरीकुर्वन्ति। भगवत्पादमते तु यत्रौपाधिको जीवोत्पत्तिः, स्वरूपतस्तु ब्रह्मभावेन

नित्यत्वम्; तत्र "विज्ञानादिभावेऽपी"ति सुतरामुपपद्यते । अयमाशयः—जीवोत्पत्तिर्गौणीति मतद्वयसंप्रतिपन्नमिदम् । इयान् विशेषः—यदद्वैतमते शरीरोत्पत्त्या जीवोत्पत्तिव्यपदेशः, श्रीभाष्यमते धर्मभूतज्ञानसंकोचविकासाभिप्राया जीवोत्पत्तिः, न तु स्वरूपोत्पत्तिरुभयत्र सम्मता । तत्र स्वरूपोत्पत्त्यभावोऽद्वैतमते जीवस्वरूपस्य ब्रह्मभावप्रयुक्तः, श्रीभाष्यमते तु स्वरूपप्रयुक्त एव । स्वतो व्यावृत्ता नित्या बहवो जीवा इति हि तन्मतम् । संकर्षणादीनां सत्यं शरीरप्रवेशमात्रप्रयुक्त एवोत्पत्तिव्यपदेशः । तदुक्तम्—उत्पन्न एवं भवति शरीरं चेष्टयन् प्रभुरि"ति, न तु धर्मभूतज्ञानसंकोचविकासाभिप्रायोऽपि स इति श्रीभाष्यकाराणामपि सम्मतमिदम् । सर्वथा तु संकर्षणादीनामहङ्कारद्युपहितानां विशिष्टेन रूपेणोत्पत्तिरेव नानुत्पत्तिरिति कृत्वैव—'विज्ञानादिभावे वे" ति विज्ञानादिभावस्यानुत्पत्तिसमर्थनार्थत्वेनोपयोग इति वस्तुस्थितिः । सर्वथा तु जीवानां विशिष्टेनौपाधिकेन स्वरूपेणानुत्पत्तिसमर्थनासम्भवं मन्वानाः सूत्रकारा "विज्ञानादिभावे वे"ति सूत्रयन्तीति "विज्ञानादिभावे वे"ति न श्रीभाष्याभिमतदिशा सिद्धान्तसूत्रतामर्हति । एतेन—स वादो न पाञ्चरात्राभिमत इत्येव तन्मतमित्यादि तद्वाक्यमपि—प्रत्युक्तम् । न हि ब्रह्मभावेन जीवोत्पत्तिसमर्थनं श्रीभाष्यसिद्धान्तदृष्ट्या पाञ्चरात्रसिद्धान्तदिशा वा संभवति ।

श्रीभाष्याभिमतपाञ्चरात्रप्रामाण्यसमर्थनस्यानपेक्षा ।

वस्तुतस्तु पाञ्चरात्रप्रामाण्यचर्चा नात्र सावसरा । पाञ्चरात्राणां हि स्मृतित्वेनैव प्रामाण्यं न वेदत्वेनेति वेदाविरुद्धेंऽशे तत्प्रामाण्यमर्थसिद्धमेव । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।" इति निर्दिष्टेषु—"स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" "एतेन योगः प्रत्युक्तः" "पत्युरसामञ्जस्यात्" इत्यादिभिस्त्रयाणां निरसनेनार्थसिद्धं वेदप्रामाण्यमिव पाञ्चरात्रप्रामाण्यमपि भवतीति व्यर्थं तत्समर्थनार्थमधिकरणान्तरम् । वस्तुतस्तु पाञ्चरात्रागमस्य पाशुपतागमस्येव द्वितीयाध्याये द्वितीयपादे समालोचनेन स्मृतित्वमेव न सूत्रकारा मन्यन्ते, किन्तु केवलयुक्त्यनुभवादिमूलकत्वमिति कथं तत्प्रामाण्यसमर्थनं द्वितीयाध्यायद्वितीयपादे सङ्गतम् ? यतो द्वितीयाध्याय-

प्रथमपाद एव तत्सङ्गतम् । न हि सूत्रकाराः कुत्रापि पाञ्चरात्रमपि जगत्कारणे ब्रह्मणि प्रमाणमिति मन्यन्ते विशिष्य, येन तत्प्रामाण्यसमर्थनस्यापेक्षा स्यात् । गौणी सुत्पत्तिः श्रीभाष्यकारै "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति सूत्रेण समर्थितैवेति तत्समर्थनेन तत्प्रामाण्यसमर्थनमप्रयोजनमेव पश्यामः । गौण्यपीयमुत्पत्तिः श्रीभाष्याभिमता न सूत्रकाराभिमतेति वेदान्तपरिभाषाभूमिकायामस्मदीयायां व्यक्तम् । कल्पतरुकारास्तु गौणोत्पत्तिं केवलमापादयन्ति, न प्रतिपादयन्ति । एवंच—"श्रीभाष्यकाराः कल्पतरुकाराश्चात्रैककण्ठ्येनोत्पत्तिवदनस्य गौणत्वतात्पर्यवर्णनेन पाञ्चरात्रस्याभ्रान्ततां वेदान्ताविरोधं कार्त्स्न्येन प्रामाण्यं च समर्थयन्ती"ति—रिक्तमिदं वचनम् ।

विमर्शकाराणां व्यर्थ परिमलविक्षेपः ।

परिमलकारास्तु दीक्षितवर्याः विमर्शरीत्यैवात्राविरोधिनोऽपि सन्तो व्यर्थमेवाक्रुश्यन्ते—"परिमलोक्तमत्र नैवाद्रियामहे" इत्यादिना वाक्यजालेन परिमलनाममात्रविक्षेपप्रदर्शनेन ।

पाञ्चरात्राधिकरणसूत्राणां श्रीभाष्यमताननुगुण्यम्,
अद्वैतवादस्य पूर्वपक्षत्वानुपपत्तिश्च ॥

सूत्राक्षराणि तु श्रीभाष्यकाराणां नानुकूलानि । विमर्शकारा हि *"श्रीभाष्यमते पादसङ्गत्यभावेऽप्यनन्तरसूत्रस्वारस्यं तु वर्तत"* इति वदन्तः स्वमते पादासङ्गतिदूषणमपरिहरणीयमेव मन्यन्ते । अत्र भगवत्पादमते सर्वाणि सिद्धान्तसूत्राणि, श्रीभाष्यमते तु प्रथमद्वितीयसूत्रे पूर्वपक्षसूत्रे, "विज्ञानादिभावे वा तदप्रतिषेधः ।" इत्यादि तु सिद्धान्तसूत्रमिति तु विवेकः । इदमेवादौ परीक्षितव्यम्—यत् को वात्र पूर्वपक्षी, को वा च सिद्धान्तीति । पूर्वाधिकरणादिषु पाशुपतादय इव पाञ्चरात्रवादिन एव पूर्वपक्षिणः, व्यासाचार्यास्तु सिद्धान्तिन इति तु वयं पश्यामः । अन्यथाग्रहणेनाद्वैतिनः पूर्वपक्षिणः, यथार्थग्राहणेन श्रीभाष्यकारानुसारिणो व्यासाचार्या वा सिद्धान्तिन इति कल्पना तु कुत्राप्यधिकरणान्तरेष्वद्वैतवादस्य निरस्यत्वे सूत्रकाराभिमते विज्ञात एव संभवति. नान्यथा । व्यासाचार्या हि नाद्वै-

तवादं स्वानभिमतं कुत्रापि सूचयन्ति। यथाच "वैधर्म्याच्च न स्वप्नादिवत्" "नाभाव उपलब्धेः" इत्यादीनां निरधिष्ठानार्थारोपवादिसौगतमतनिरासार्थत्वमेव, न तु साधिष्ठानारोपवादिमायावादिनिरासार्थत्वम्, तथाऽनुपदमेव व्यक्तीभविष्यति।

"असत्यमप्रतिष्ठमि" त्यादि गीतादिक्यानामद्वैतनिन्दायामतात्पर्यम्।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमिति"तु नाद्वैतवादगोचरम्, यत्र सेश्वरत्वं साधिष्ठानत्वं चासत्यानामूरीक्रियते। नहि भगवद्गीताऽद्वैतवादानादरज्ञापिका, प्रत्युत तस्यैव समादरणीयत्वप्रतिपादिकेति पूर्वमेवाग्नेयपुराण-पद्मपुराणादिगत-गीतासारानुसारेण प्रतिपादितम्। तदिदं सिद्धम्—यत् पाञ्चरात्राप्रामाण्यसमर्थनार्थमेव पाञ्चरात्राधिकरणम्। अत एव शाक्यस्मृतिसमान-योगक्षेममेवाप्रमाण्यं पाञ्चरात्रस्य तन्त्रवार्तिके कुमारिलोक्तमुपपद्यते।

भगवत्पादसम्मत-सौत्राद्वैतवादस्य व्यवहारदृष्ट्या यावज्ज्ञानं कर्मकाण्डप्रामाण्यादिपरस्य न तामसत्वेनानादरणीयत्वम्।

"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा॥
अपार्थं श्रुतिवाक्यानां दर्शयन् लोकगर्हितम्।
स्वकर्मरूप त्याज्यत्वमत्रैव प्रतिपाद्यते॥
सर्वकर्मपरिभ्रष्टैर्वैधर्मत्वं तदुच्यते।
परेशजीवयोरैक्यं मया तु प्रतिपाद्यते॥
ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते मया।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे॥
वेदार्थवन्महाशास्त्रं मायया यदवैदिकम्।
मयैव कल्पितं देवि जगतां नाशकारणात्॥
मदाज्ञया जैमिनिना पूर्वं वेदमपार्थकम्।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥"

इत्यादीनि पाद्मपुराणगतानि वचनानि"सर्वकर्मत्यागम् "सर्वं ब्रह्म वदिष्य-

न्ति संप्राप्ते तु कलौ युगे" इति वाक्यप्रतिपादितकेवलब्रह्मवादम्, व्यवहारदृष्ट्याऽपि प्रपञ्चमिथ्यात्ववादादिकं च श्रुतिसिद्धं वदतामिदानीन्तनानां केषांचन सौत्राद्वैतवादस्वरूपानभिज्ञानां तद्दूषणपराणां वा विषयीकरोति, नतु सौत्रं यथासम्भवं व्यवहारदशायां यावच्चित्तशुद्धि यावत्तत्त्वसाक्षात्कारं वा कर्मानुष्ठानावश्यकतादिव्यवस्थापनपरमद्वैतवादम्। तथाचेमानि वचनानि परेषामद्वैतमते प्रपञ्चः शशशृङ्गकल्पोऽसन्नेवेति मायिकस्य प्रपञ्चस्यासत्त्वमित्यन्यथाग्रहणग्राहणादिकमेव तामसं प्रतिपादयन्ति। अत एव "मायावादमसच्छास्त्रमि" ति "असच्छास्त्रपदप्रयोग उपपद्यते। सौत्रो हि भगवत्पादसम्मतो मायावादो नाऽसद्वाद इति नासच्छास्त्रमिति सर्वविदितमिदम्। अत एव—"स्वकर्मरूपत्याज्यत्वम्" "सर्वधर्मपरिभ्रष्टैर्वैधर्मत्वं तदुच्यते" इत्याद्युल्लेखः सप्रयोजनो भवति। अयमत्र सारांशः—यत् सत्यमद्वैतवादे जीवब्रह्मैक्यं मुक्तौ सर्वकर्मकारकादिबाधश्च भवति, स च सात्त्विक एव, यतो यावत्साक्षात्कारं सर्वसत्यत्ववादेन कर्ममार्गोऽपि तत्र भक्तिमार्गेण साकं परिपाल्यते। यस्तु पुनः कर्मयोग-भक्तियोगादिविरोधेन केवलज्ञानयोगमात्राद्यवलम्बनेन च केषांचनाधुनातनानामद्वैतवादः, स तु तामस एव। इदं हि प्रकरणं भगवद्भक्तानां दैत्यानां भक्तिमार्गविघातकशास्त्रप्रवर्तनमेव विषयीकरोति। तेनच भक्तिमार्गविरोधि सर्वमपि दर्शनं तामसमित्येवोक्तसन्दर्भाशयः। भगवत्पादीयस्तु सौत्रोऽद्वैतवादो न तादृश इति न दोषः। यत्तु—निरीश्वरवादस्य पूर्वं जैमिनिप्रवर्तितस्य तामसत्वमत्र वर्णितम्, इदमपि जीवेश्वरविभागेन भक्तिमार्गस्यापि प्रवर्तनमपेक्षितं जैमिनिना न कृतमित्येव गमयतीति न विरोधः।

श्रीभाष्यकारसम्मतविशिष्टाद्वैतवादस्यैव
तामसत्वे उक्तपद्मपुराणतात्पर्यम्।

तदिदं सिद्धम्—यत् न भगवत्पादप्रवर्तितोऽद्वैतवादो न तामसः, किन्तु श्रीभाष्यसम्मतो विशिष्टाद्वैतवाद एव: यतः—पद्मपुराण एव गीतासारोपबृंहणव्याजेनाद्वैतवाद एव समर्थितः। श्रीभाष्यकारा हि पूर्वोत्तरयोर्मीमांसयारैकशास्त्र्येण स्वायं सिद्धान्तमुपक्षिपन्तो जैमिनीयकर्मविचारेण साकमेव संपू-

र्णतां ब्रह्ममीमांसाया मन्यन्ते । जैमिनीयं तु शास्त्रं तामसमित्यनुपदमेवोपक्षिप्तं पद्मपुराणवचनानुसारेणेति तामसत्वमंशविशेषे नियतमूरीकर्तव्यम् । अनेन हि विज्ञायते—यत् ब्रह्ममीमांसायाः पूर्वमीमांसया साकमेकत्वेन विवरणादिकमेव तामसमिति तद्भिन्नवाक्यतया ब्रह्ममीमांसायोजनेन प्रवृत्तः सेश्वरभक्तियोग-कर्मयोगोऽद्वैतवाद एव प्रामाणिकः । जैमिनीयमीमांसाया एव सेश्वरमीमांसात्वेन योजनं तु न व्यासाचार्याभिमतम् , यतः—"निरीश्वरेण वादेन" इति स्पष्टं जैमिनीयमीमांसाया निरीश्वरत्वं पद्मपुराणे व्यासाचार्या मन्यन्ते । एतेनान्यत्र जैमिनेरपीश्वरनिरासेऽतात्पर्यमित्युक्तिरपि व्याख्याता । न हि सा व्यासाचार्याभिमतेति तु निष्कर्षः । अस्मिन् हि प्रकरणे सात्त्विकराजस-तामसदर्शनगणनप्रसङ्गे पाञ्चरात्रं तु शास्त्रत्वेनापि न परिगणितमिति तत्प्रामाण्येऽपि पद्मपुराणं नानुकूलमिति प्रतिभाति । श्रीमद्भागवतं तु—श्रुतिगीतादिस्वारस्यसमालोचनेऽद्वैत एव स्वरसमिति प्रसङ्गान्तरे विवेचयिष्यते । वस्तुतस्तु—श्रीमद्भागवतसम्मतः शुद्धाद्वैतवादः, केवलाद्वैतवादः, विशिष्टाद्वैतवादः, द्वैतवादो वेति विप्रतिपन्नोऽयं सांप्रतं विषयः । सर्वथातु पाञ्चरात्रप्रामाण्ये सूत्रकाराणामतात्पर्यात् न सूत्राक्षरानुगुणं श्रीभाष्यकाराणां पाञ्चरात्राधिकरम् ।

### वाशब्दस्वारस्येन "विज्ञानादिभावे वा" इति सूत्रस्य न सिद्धान्तसूत्रत्वसम्भवः ।

सत्यं वाशब्दः पक्षान्तरपरिग्रहे पूर्वपक्षनिरासेऽवधारणे वा स्वरसः । समुच्चयार्थेऽपितु क्वचित् "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" "अन्तवत्त्वमसर्वज्ञता वा" इत्यादौ प्रयुज्यत इति श्रीभाष्यानुयायिनोऽपि नापह्नोतुमीशते । द्वितीयाध्यायद्वितीयपादे हि प्रायेण प्रत्यधिकरणं चशब्दोऽपिशब्दो वा प्रयुज्यते । तत्र प्रथमान्तेन चशब्दः सप्तम्यन्तेनापिशब्दः । अपिशब्दोऽपि "समुदाय उभयहेतुकेऽपि" इत्यादौ पक्षान्तरपरिग्रह एव वर्तत इति "विज्ञानादिभावे वे"ति सूत्रेऽपि पक्षान्तरपरिग्रहेऽपि न दोषः ; यतः पक्षान्तरमेवेदं "विज्ञानादिभावो जीवानां सङ्कर्षणादीनाम्, यदवलम्बनेनोत्पत्त्यभावः समर्थ्यते । नहि वाशब्दः

सर्वत्र पूर्वपक्षनिरासार्थं एव ; अन्यथा "अन्तवत्त्वमसर्वज्ञता वा" इति सिद्धान्तसूत्रम्, "पत्युरसामञ्जस्यादि"त्यादि पूर्वपक्षसूत्रमापद्येत ।

"विज्ञानादिभावे वा तदप्रतिषेध"इत्यत्र तदप्रतिषेधपदार्थविचारः ।

सति चैवं "विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्रे तदप्रतिषेधपदेन क्रमिकोत्पत्त्यसंभवाप्रतिषेध एव विवक्ष्यते, न तु पाञ्चरात्रप्रमाण्याप्रतिषेधः । पाञ्चरात्रप्रामाण्यं ह्यत्र साधनीयं पूर्वपक्ष्युपक्षिप्ताप्रामाण्यहेतुनिरासेनैव साधितं भवति । विज्ञानादिभावेन तु तत्प्रामाण्यप्रतिषेधासंभवोऽप्युत्पत्त्यसंभवाभ्यनुज्ञानेनैव वक्तव्यः । तथाच विज्ञानादिभावेनोत्पत्त्यसंभवात् जीवानां पाञ्चरात्रप्रामाण्यमेव यद्यत्र वाक्यार्थः, तर्हि पूर्वोत्तरपक्षयोरेकहेतुकत्वं पर्यवस्यति । पूर्वपक्षिणापि उत्पत्त्यसंभवादप्रामाण्यमुक्तम् , सिद्धान्तिनाप्युत्पत्त्यसंभवेनैव प्रामाण्यमुच्यते । इदं च व्याहतम् । अस्मिंश्च पक्षे "विप्रतिषेधादि"ति सूत्रमपि वितथमेव । अनेनापि हि सूत्रेण श्रीभाष्यकाराः उत्पत्तिप्रतिषेधमेव जीवानां प्रतिपादयन्ति । विज्ञानभावप्रतिपादनेन ह्यर्थसिद्ध उत्पत्तिप्रतिषेध इति किं वा प्रयोजनमस्य सूत्रस्येति भवन्त एव विवेचयन्तु। अद्वैतसम्मते तु विवरणे—तदप्रतिषेधपदेनोत्पत्त्यसंभवाप्रतिषेधविवक्षणात् विज्ञानादिभावेन नित्यत्वमुत्पत्तिश्चेति व्याघातबोधनाच्च सूत्रद्वयेनाप्यप्रामाण्यव्यवस्थापनमेव क्रियत इति न दोषः । अयं भावः— "तदप्रतिषेध"पदे तत्पदेन सूत्रकारा उत्पत्त्यसंभवमेव स्वशब्दोपात्तं परामृशन्ति । सूत्राणां न्यायप्रधानानां सति संभवे न्यायसंभवासंभवस्थापनार्थत्वस्यैव युक्तत्वात् । पूर्वपक्षसूत्रेण पूर्वपक्षसाधकतया निर्दिष्टस्य हेतोरेव तु सिद्धान्तसूत्रे तच्छब्देन ग्रहणं सांप्रतम् । एतेन—तच्छब्देन प्रकृतस्य पाञ्चरात्रस्य तत्प्रामाण्यस्य वा पक्षविपर्यासद्योतकेन वाशब्देनोपस्थापिततया परामर्शो स्वारस्यमिति शङ्काऽपि परास्ता । सर्वथातु पाञ्चरात्राप्रामाण्यसमर्थनमेव सूत्रकाराभिमतम् ।

पाञ्चरात्राप्रामाण्यस्यैव सूत्रकाराभिमतत्वे युक्त्यन्तर सङ्ग्रहः ।

"उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः" इति सूत्रे भामतीकल्पतर्वादिषु पाञ्चरात्रमतोल्लेखेन हि पाञ्चरात्रमतमौडुलोमिमतं चैकमिति प्रतीयते । नह्यौडुलोमिमतं व्यासाचार्यमतमिति, पाञ्चरात्राप्रामाण्यवाद एव स्थापितो भवति

जीवोत्पत्तिवादोऽपि औडुलोमिसम्मत इति कुत इदमवगम्यते ? येन "अनादिर्जीव इति पाञ्चरात्राभिन्नत्वेनौडुलोमिमतमिति न शक्यापह्नवम्। औडुलोमिर्न जीवोत्पत्तिवादी"त्यादि शङ्कानामवसरः स्यात्। तदिदं सिद्धम्—यत् न पाञ्चरात्राधिकरणमिदं श्रीभाष्यकाराणां सूत्राक्षराद्यनुगुणमिति। सर्वथातु महाभारतादौ पाञ्चरात्रोत्कर्षप्रतिपादनं विष्णुपरमात्मतावादोपक्षेपणं वा न व्यासाचार्याभिमतमिति न महाभारतानुसारेण विष्णुप्राशस्त्यपरत्वं सूत्राणां वक्तुं शक्यते ॥

सुबालोपनिषत्प्रतिपाद्यमपि तुरीयनारायणस्वरूपमेव,

नतु त्रिमूर्त्यन्तर्गतविष्णुस्वरूपम्।

एतेन – सुबालोपनिषदपि—व्याख्याता। अत्र हि 'बीजाज्ञानमहामोहापह्नवाद्यद्विशिष्यते। निर्बीजं त्रैपदं तत्त्वं तदस्मीति विचिन्तये" इति यदात्मना जीवस्वरूपमात्मा ज्ञेयतयोपक्षिप्तः, "किं तदासीदि"ति प्रश्नसमाधानरूपेण "न सन्नासन्नसदसत्" इति सत्तादिधर्मशून्यं सत्स्वरूपं शुद्धं प्रतिपाद्य तस्यैव महदहङ्कारादिसृष्ट्यनन्तरं सर्वतादात्म्यापन्नस्य सहस्रशीर्षत्वाद्युल्लेखेन सर्वोपाध्युपहितं तुरीयं चैतन्यमेव पुरुषपदार्थतया प्रतिपाद्यते,नतु लक्ष्मीपतिर्नारायणस्त्रिमूर्त्यन्तर्गतोऽक्षिद्वयविशिष्ट इति स्पष्टमिदं सर्वेषाम्। सति चैवं"दिव्य एको नारायण" इत्यादिभिः सर्वतादात्म्येन सर्वशरीरकतया चोक्तोपनिषत्प्रतिपाद्यं कारणस्वरूपमपि तुरीयनारायणस्वरूपमेव, यस्याधिष्ठानं शुद्धचैतन्यमित्युक्तोपनिषदः सारः। अत एव—"अशब्दमस्पर्शमि"त्यादिवाक्यान्युपपन्नानीति, यदि सुबालोपनिषदेकवाक्यतानुसारेणैव सर्वत्र कारणवाक्येषु गतिस्तावतापि कथं त्रिमूर्त्यन्तर्गतविष्णुकारणताव्यवस्था ?

श्रीवैष्णववादे आकाशाधिकरणादिवैयर्थ्यम्।

एतेन—आकाशाधिकरणादिषु सर्वत्र सुबालोपनिषदनुसारेण व्यवस्थेति व्याससिद्धान्तमार्तण्डोक्तिः—परास्ताः; पूर्वपक्षस्यैवानुत्थानात्। पूर्वाधिकरणेषु कारणत्वं विष्णोरेवेति सुबालोपनिषदनुसारेण कारणवाक्येषु निर्णयानन्तरमाकाशादिशब्दैरपि कारणपरैर्विष्णोरेव विवक्षेति न्यायत एव लाभात् आकाशश-

ब्दस्य विष्णुरुद्रयोरुभयत्र प्रयोगस्यादर्शनाच्च कथं वाऽत्र पूर्वपक्षोत्थितिरिति यद्व्याकाशप्राणाद्यधिकरणानि वितथानि भवेयुः।

रुद्रशब्दघटितानामिव नारायणशब्दघटितानामपि
नेतरेतरव्यावर्तनेन कारणस्वरूपबोधकत्वम्।

वस्तुतस्तु - सूत्रकारैः कुत्रापि मात्रया सर्वत्र सुबालोपनिषदादितात्पर्येणैव कारणवाक्येषु व्यवस्था कर्तव्येति न सूत्रितम्, येन सामान्यशब्दानां तदेकवाक्यतयैव निर्णायकत्वं व्यवस्थापितं स्यात्; अन्यथा "देवा ह वै स्वर्गं लोकमायंस्ते रुद्रमपृच्छन् को भवानिति? सोऽब्रवीदहमेकः प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत्... यो वै रुद्रः स भगवान् ब्रह्मा तस्मै नमो नमः, यो वै रुद्रः स भगवान् विष्णुस्तस्मै नमो नमः, यो वै रुद्रः स भगवान् स्कन्दस्तस्मै नमो नमः" इत्यादिभिरथर्वशिरउपनिषदनुसारेण रुद्रस्यैव ब्रह्मविष्ण्वादिशरीरकस्य सर्वोपनिषत्तात्पर्यविषयत्वं कथं न स्यात्? शिवोत्कर्षप्रतिपादकमैत्र्युपनिषदप्यत्रानुसन्धेया। "स ब्रह्मा स विष्णुस्स इन्द्र" इत्यादि ब्रह्मविष्ण्वादीनामुपक्रमेण किं ब्रह्म? को ब्रह्मा? को विष्णुः? इत्यादि प्रश्नपूर्वकं विष्ण्वाद्यतिरिक्तं ब्रह्म प्रतिपादयन्ती निरालम्बनोपनिषदपि नात्र विस्मरणमर्हति।

अयमत्र सारांशः—उपनिषदां सामान्यतो विशेषतो वा प्रवृत्तानामविरोधेन समन्वयव्यवस्थापनार्थमेव ब्रह्ममीमांसारम्भ इति सर्वसंप्रतिपन्नमिदम्। तत्र च विशेषशब्दतया कस्य विवक्षेति विशये तु सूत्रकाराः ब्रह्मजिज्ञासापदं प्रयुञ्जानाः सुबालोपनिषदादिवाक्यासङ्ग्रहणेन "जन्माद्यस्य यतः" इति ब्रह्मशब्दघटितमेव कारणवाक्यं लक्षणवाक्यतया संगृह्णन्तश्च न शैववैष्णवादिमतं स्वमतं मन्यन्ते। एवं वदन्तो वयं त्रिमूर्त्यन्तर्गतस्य शिवस्यैव कारणत्वमिति पक्षमपि न सूत्रकाराभिमतं पश्याम इति निर्मूलैवेयं व्याससिद्धान्तमार्तण्डकाराणां सूत्रयोजना। न हि सूत्रकाराः कुत्रापि स्वीये निबन्धे त्रिमूर्त्यन्तर्गतं विष्णुमेव जगत्कारणं प्रतिपादयन्ति।

आनन्दमयाधिकरणस्य विष्णुपरताऽसम्भवः।

आनन्दमयाधिकरणे अभ्यासेनानन्दमयस्य न विष्णुत्वं साध्यते इति वक्तुं शक्यते; आनन्दमयप्रकरणे कुत्रापि विष्णोरनभ्यासात्। सत्यमादित्यान्तवर्तिन आनन्दमयस्य चैक्यं "स यश्चायं पुरुषे। यश्चासावादित्ये" इति प्रतिपादितम्; तावतापि तस्य नारायणत्वं तु न सम्भवति। अन्तरधिकरणविषयवाक्ये तु न श्रुत्याऽऽदित्यान्तवर्तिनो नारायणत्वं गम्यते, किन्तु लिङ्गेन। लिङ्गं तु श्रुतेर्दुर्बलमिति सर्वसम्मतमिदम्। मैत्रायण्युपनिषदि हि -"तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै तेऽवस्थिता योऽस्य भर्गः कं सञ्चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति,बुद्धयो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्म वादिनोऽथ भर्ग इति, यो ह वा अस्मिन्नादित्ये निहितस्तारकेऽक्षिणि चैष भर्गाख्यो भाभिर्गतिरस्य हीति, भर्गो भर्जयतीति चैष भर्ग इति रुद्र" इत्यादित्यादिगततया रुद्रपदार्थ एव बोध्यते श्रुत्येति, "अन्तरधिकरणविषयवाक्ये श्रीकण्ठभाष्योक्तरीत्या अक्षिणीति द्वित्वस्य ग्रहैकत्ववदविवक्षां स्वीकृत्य द्व्यधिकनेत्रस्यैव पूर्वोक्तरीत्या नारायणशब्दवाच्यस्य ग्रहीतव्यत्वेन न त्रिमूर्त्यन्तर्गतस्य विष्णोरत्र ग्रहणं भवितुमर्हति। एतेन—आनन्दमयाधिकरणे –आनन्दमयादित्यान्तवर्तिनोरैक्योपदेशात् आदित्यमण्डलान्तर्वर्तिनश्च नारायणत्वस्य व्यवस्थापयिष्यमाणतयाऽऽनन्दमयस्यापि नारायणत्वमिति शङ्कापि –परास्ता; सिद्धान्तमार्तण्डकारा हि—"अजायमानो बहुधा विजायते" इत्यादिवाक्यैकवाक्यतयैव विष्णोरकर्मवश्यत्वमन्तरादित्यवाक्यगतापहतपाप्मत्वेनोपपादयन्तीति पुरुषसूक्तगतं सहस्राक्षत्वमपि लिङ्गं तन्मतविघातकमेव।

मान्त्रवर्णिकसूत्रेण तैत्तरीयोपनिषदो विष्णुपरत्वव्यवस्थापनासम्भवः॥

एतेन—'सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रे योगरूढेनानन्तपदेन नारायणस्यैव व्यवस्थापनात् तस्यैव मान्त्रवर्णिकस्यानन्दमयशब्दवाच्यत्वमिति शङ्कापि—परास्ता; अनन्तपदेनैव रूढ्या ब्रह्मसमर्पणे ब्रह्मपदवैयर्थ्यात्। ब्रह्मपदं हि न सामान्यपदम्, किन्तु परमात्मन्येव मुख्यं विशेषपदमेव। अत एव—

"परं जैमिनिर्मुख्यत्वात्" इति मुख्यत्वहेतूपपत्तिः। परिच्छेदराहित्यमेवानन्तपदार्थ इति श्रीरङ्गरामानुजव्याख्यापि मन्यते भवदीया न नानन्तपदार्थोऽत्र विष्णुरिति। आनन्दमयस्य ह्यात्मा आनन्दः, पुच्छं ब्रह्मेति निर्देशो हि नानन्दमयः परमात्मा, न वा स विष्णुरेवेति मत एवोपपद्यते।

सुबालोपनिषदो न विष्णुसर्वान्तर्यामित्वे प्रमाणता।

सर्वान्तर्यामी ह्यानन्दमयो न विष्णुरिति नेदं भवदीयनारायणास्त्रसुबालोपनिषदोऽपि सम्मतम्; यतः सुबालोपनिषदि पञ्चमे खण्डे—"पादावध्यात्मं विष्णुस्तत्राधिदैवतम्, नाड्यो तेषां निबन्धनम्, यः पादे यो गन्तव्ये यो विष्णौ यो नाड्यां य एतस्मिन्सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तमि"ति विष्णोरप्यन्तर्यामी नारायण एवानन्त इति प्रतिपाद्यते। तथाचानन्तपदस्वारस्येनापि मान्त्रवर्णिको न विष्णुरिति सिद्ध्यति।

अन्तस्तद्धर्माधिकरणस्य विष्णुपरत्वासम्भव.

एतेन—'अन्तस्तद्धर्मोपदेशात्" इति सूत्रस्थतत्पदेन नारायणविवक्षापूर्वकं विष्णुपरत्वव्यवस्थापनमपि सिद्धान्तमार्तण्डकारणाम्—परास्तम्। पूर्वत्र भवदीयस्य नारायणस्याप्रस्तुतत्वात्, अन्तरादित्यवाक्योच्चारणकाले तस्यानुपस्थितेश्च। वस्तुतस्तु—"नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः"इति नारायणोपनिषदि हिरण्यवर्णत्वं नारायणपदवाच्यस्य रुद्रस्यैवावगम्यते, नतु विष्णोस्त्रिमूर्त्यन्तर्गतस्य। नारायणोपनिषदिति समाख्या पशुपत्यादिशब्देन तस्योपपादनं च मुख्यो नारायणपदार्थः पशुपतिरेवेति गमयति। नह्यादित्यान्तर्यामी विष्णुः, 'आदित्यो वा एतन्मण्डलं तपति······य एषोऽन्तरादित्ये पुरुषे हिरण्मयः" इत्यादि वाक्यानन्तरम्—निधनपतये नमः" इत्यादिना मृत्युञ्जयत्वादिसदाशिवलिङ्गानामेवाम्नानादादित्यान्तर्वर्तित्वं प्रलयाधिष्ठानस्य तुरीयस्यैव प्रतीयते। गायत्र्यर्थोऽप्यादित्यान्तवर्ती रुद्र एवेति पूर्वमेव विवेचितमिति नान्तरादित्यवाक्यप्रतिपाद्यो विष्णुः। नह्यत्र वाक्ये एकमपि विष्णुलिङ्गं वयं पश्यामः।

पुण्डरीकाक्षत्वमन्तरादित्यवाक्यावगतं न विष्णुलिङ्गम् ।

पुण्डरीकाक्षत्वं हि समस्तपदप्रतिपाद्यमेव विष्णुलिङ्गम्, नतु व्यस्तपद-प्रतिपाद्यम् । "ब्रह्मण्यः पुण्डरीकाक्षः" "स देवः पुण्डरीकाक्षः" जितं ते पुण्डरीकाक्ष !' इत्यादावपि समस्तमेव पुण्डरीकाक्षपदम् ।

"कप्यासं पुण्डरीकमेवमक्षिणी" इत्यत्र न विष्णूपस्थितिः ।

एतेन—सूत्रे धर्मोपदेशग्रहणमुपलक्षणम्; पुरुषश्रुति-पुण्डरीकाक्ष-श्रुतिभ्यामप्यादित्यान्तर्वर्तिनो नारायणत्वावगमादिति शङ्कापि--निरस्ता । विशेष्यपरं रूढं ह्येकं श्रुतिपदेन ब्रह्ममीमांसायां विवक्ष्यते, नतु विशेषण-बोधकमेकमनेकानि वा पदानीति, "कप्यासं पुण्डरीकमेवमक्षिणी"ति न श्रुतिः । एतेन--"यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति विग्रहवाक्येन समस्तं पुण्डरीकाक्षपदमुपस्थाप्यत इति कल्पनाप्यसांप्रतमिति—सूचितम् । विग्रह-वाक्येन ह्यनेन कप्यासपुण्डरीकाक्षपदमेवोपस्थाप्येत, नतु पुण्डरीकाक्षपदम् । अनेनेदमपि सूच्यते—यत् विष्णुलिङ्गत्वमेवास्य पुण्डरीकविशेषसदृशाक्षिद्वय-वत्त्वस्य न सम्भवतीति । कप्यासपदार्थस्तु श्रीभाष्यकाराणां भगवत्पादानां च मते विलक्षण इत्यन्यदेतत् ।

आकाशाद्यधिकरणानां रुद्रादिचेतनान्तर-
व्यवच्छेदतात्पर्यासम्भवः ।

अयं भावः आकाश-प्राण-ज्योतिराद्यधिकरणेषु ज्योतिरादिपदानां वाक्य-विशेषगतानां भौतिकज्योतिरादिनिराकरणेन परमात्मपरत्वव्यवस्थापनमेव यदि सिद्धान्तमार्तण्डकारा मन्यन्ते, तर्हि तु न कस्यापीदं विरुद्धम् । यदि त्वाकाशादि-प्रतिपाद्यो विष्णुरेव, नतु रुद्रादिरिति मन्यते, तर्हि तु नेदमाकाशस्तल्लिङ्गादि"ति सूत्रं भवतामनुगुणम् । मान्त्रवर्णिकसूत्रे हि नारायणश्रुतिरनन्तपदमिति भवद्भिरेवोप-क्षिप्तम् । सति चैवमनन्तत्वमन्तरादित्यस्थं 'तल्लिङ्गादि" ति लिङ्गतया गृहीतं कथं न विरुद्धम् ? वस्तुतस्तु—अनन्तपदं यौगिकमेव ब्रह्मपरेषु सर्वेषु वाक्येषु, तदपि तुरीय एव स्वरसमिति पूर्वोद्धृतसुबालोपनिषदनुसारेण पूर्वमेव सूचितम् ।

प्राणपदस्य रुद्रनिरासेन विष्णुसमर्पणे न तात्पर्यमित्युपपादनम्।

प्राणपदस्याकाशपदस्येव सत्यं ब्रह्मणि प्रयोगो दृश्यते, "प्राणस्य प्राणमि"त्यादौ। विष्णावेव विशिष्य प्रयोगस्तु न कुत्रापि दृष्टचरः "यदिदं किञ्च जगत् प्राण एजति" इति वाक्ये तु "तद्विष्णोः परमं पदमि" ति वाक्यशेषात् सत्यं विष्णुपरत्वं प्रतीयते; परन्तु विष्णुपदार्थोऽत्र व्यापकं स्वरूपमेवेति षष्ठवल्ल्येकवाक्यतया पूर्वमेव विवेचितमिति न दोषः। अयं भावः—षष्ठवल्ल्याम्—"तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति ब्रह्मपदघटितवाक्यानन्तरमेव—"यदिदं किञ्चे" ति वाक्यं प्रवृत्तम्। अतोऽपि तु परमात्मैवात्र प्राणपदार्थ इति विज्ञायते।

ज्योतिरधिकरणस्य तुरीयपरत्व एव स्वारस्यम्।

"ज्योतिश्चरणाभिधानात्" इति सूत्रं चतुष्पाद्ब्रह्मणश्चतुर्थपादत्वाम्नानेन हेतुना ज्योतिःपदार्थनिर्णायकं यथा भौतिकज्योतिर्निरासपरम्, एवं पूर्वोक्ताथर्वशिखोपनिबद्धतचतुर्थपादस्याप्युपस्थापनद्वारा ब्रह्म-विष्णु-रुद्रातिरिक्त-पुरुषपदवाच्य-तुरीयपरमात्मस्वरूपव्यवस्थापकमपि भवितुमर्हति। सत्यं त्रिपादस्यामृतं दिवि" इति वाक्यमेवात्र चरणाभिधानशब्देन विवक्ष्यते, तथापि भूतानां पादत्रयस्यवर्णनस्य श्रुत्यन्तरे ब्रह्म-रुद्रादिपादत्रयाभिधानस्य च सति सम्भव एकवाक्यता स्वीकर्तव्येति भूतपदेन (भौतिक) सात्त्विकादिरुद्रादिविवक्षणात् नानुपपत्तिः। अत्र चतुर्थपादस्य "दिवि" इति वर्णनेनाप्राकृतत्वमेवाभिप्रेयत इति तत्त्वम्। सर्वथा तु तुरीयस्यैव परमात्मनो बोधन एव ज्योतिरधिकरणस्वारस्यम्। अनेन पुरुषसूक्तस्यापि - पुरुषविषयकत्वम्, तस्य च चतुर्थपादत्वोपक्षेपश्च नितरामुपपद्यते। सति चैवं व्याससिद्धान्तमार्तण्डकाराः—पुरुषसूक्तेऽपि 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति वाक्यस्यामननात् तदेकवाक्यतयैवार्थो वर्णनीय इति यद्वदन्ति, तदपि दत्तोत्तरमेव; यतो वयमपि पुरुषसूक्तैकवाक्यतामेवात्र स्वीकुर्मः। इयान् विशेषः—यत्—पुरुषसूक्तं विष्णुपरमिति मार्तण्डकाराः, वयं तु पुरुषपदमुख्यार्थतुरीयपरमिति। सर्वथा तु न रुद्रादिनिरासेन विष्णुप्रतिपादनार्थं ज्योतिरधि-

करणम् । आकाशप्राणशब्दयोरिव ज्योतिःपदस्यापि विशिष्य रुद्रविष्ण्वोः प्रयोगस्यादर्शनान्न संशयोत्थानमिति तु दूषणमत्राप्यविशिष्टमेव ।

प्रतर्दनाधिकरणस्यापि न रुद्रनिरासेन विष्णुव्यवस्थापने तात्पर्यम् ।

इन्द्रप्रतर्दनाधिकरणे प्राणादिपदस्य परमात्मपरत्वे न कस्यापि विवादः। स हि विष्णुरेव, तस्यैव शास्त्रदृष्ट्या सर्वान्तर्यामित्वेनात्मत्वेनेन्द्राद्यहंप्रतीति-विषयत्वमिति तु न वयमनुमन्यामहे। "शास्त्रदृष्ट्या तूपदेशः" इति शास्त्रदृष्टि-पदं हि सूत्रकारैरहङ्कारपरित्यागेन चैतन्यस्वरूपमभिप्रेत्यैव प्रयुक्तम्, अतो नाऽहं-प्रतीतिविषयत्वं लोकसिद्धमत्र 'मां" पदार्थसमालोचनावसरे ग्रहीतव्यमिति । लोकदृष्ट्याऽऽत्मनोऽहंप्रतीतिविषयत्वम्, शास्त्रदृष्ट्या तु न तदिति तु विशेषोऽत्र शास्त्रदृष्टिपदेन बोध्यते । अनेन च कल्पितोऽहंकारसम्बन्धः, तत्त्वतस्तु न स प्रत्यगात्मन इति गम्यत इति सर्वान्तर्यामित्वमपि शुद्धस्य चैतन्यस्यैव युक्तम्। तदन्तर्यामित्वं नाम तदधिष्ठानतया सर्वानुस्यूतत्वेन नियन्तृत्वम्। न चैतत् शरीरशरीरिभावप्रयुक्तम्, क्रियादीन्यपि हि नियम्यानीति तदन्तर्यामित्वमपि परमात्मनो ह्यवश्यमङ्गीकर्तव्यम्। न च क्रियया साकं शरीरशरीरिभावेन सामानाधिकरण्यं परमात्मनः श्रीभाष्यसिद्धान्तेऽपि संभवति ।

तुरीयस्यैव शास्त्रदृष्ट्यात्मत्वव्यवस्था ।

ततश्च सर्वानुस्यूतत्वनियन्धनमेवान्तर्यामित्वं परमात्मन इति पूर्वोक्ता-थर्वशिखोपनिषदादिस्वारस्यात् भवदीयनारायणास्त्रसुबालोपनिषदीयपञ्चम-खण्डानुसाराच्च तुरीयमेव ब्रह्म-विष्णु-रुद्रातिरिक्तमन्तर्यामिस्वरूपमिति, "मामु-पास्व" इत्यादिनेन्द्रादिबोध्यमानमपि तुरीयमेव भवति । स एव हि शास्त्रदृ-ष्ट्यात्मा। सति चैवं गीनागतम्, अथर्वशिरउपनिषद्गतमिन्द्रप्रतर्दनाख्यायि-कागतं वा मांपदं तुरीयमेव विषयीकरोतीत्येव युक्तम् । यत्तु—

तस्मिन् हि पूज्यमाने वै देवदेवे महेश्वरे ।
सम्पूजितो भवेत्पार्थ देवो नारायणः प्रभुः ॥
अहमादिर्हि भूतानां विश्वेषां पाण्डुनन्दन ।
तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ॥

इति वचनजातम्, इदमपि तुरीयाशयमेव। 'देवा वै स्वर्गं लोकमायंस्ते रुद्रमपश्यन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासं वर्तामि'' इत्यादि प्रतिज्ञाय "यो वै रुद्रस्स भगवान् विष्णुस्तस्मै नमो नम'' इत्यादिना विष्णवाद्यात्मत्वं रुद्रस्य प्रतिपाद्यमानमपि तुरीयाभिप्रायमेव। अत एव "किं ब्रह्म? को ब्रह्मा? को विष्णुः? को रुद्र इति ब्रह्मणो ब्रह्म-विष्णु-रुद्रातिरेकेण प्रश्न उपपद्यते ।

भगवद्गीतादिगतमांपदस्यापि वासुदेवातिरिक्तपरत्वम् ।

अत एव—स्वयं स्वस्य ब्रह्मांशत्वोपपादनपूर्वकम्—"मामुपास्वे''ति प्रतिप्रतिपाद्यमानं ब्रह्मस्वरूपम्—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ'' इति परोक्षतयाऽतिरिक्तरूपेण निर्दिश्यते। अत्र – परोक्षतया ब्रह्मस्वरूपनिष्कर्षेण हि भगवान् वासुदेव एव स्वयमहंकारपरित्यागेनैवान्तर्यामिस्वरूपं ज्ञेयं प्रतिपादयतीति, शरीरशरीरिभावेनाहमित्येव परमात्मापि मुक्तावपि ज्ञेय इति निरस्तं भवति। अनेन च यावदहम्भावं वासुदेवोऽपि विभूतिकोटिप्रविष्ट इत्येव गीतासारः । अत एव—वृष्णीनां वासुदेवोऽस्मीत्यहम्भावेन साकमेव स्वस्य विभूतित्वनिर्देश उपपद्यते।

अथर्वशिरउपनिषद्वाक्यानां रुद्रान्तर्यामिविवक्षायामप्यदोषत्वम् ।

एतेन—''मत्तोऽन्यन्नास्ती''ति प्रतिज्ञाय वक्ष्यामाणवाक्येष्वहंशब्दार्थविवरणाय मध्य आह –"सोऽन्तरादन्तरं प्राविशत् दिशश्चाभ्यन्तरं स प्राविशत् सोऽहमि''ति । अत्र तच्छब्दः प्रसिद्धनारायणपरामर्शी''ति सिद्धान्तमार्तण्डोक्तिरपि—व्याख्याता; यतो वयमपि तुरीयमेव नारायणपदवाच्यं रुद्राद्यन्तर्यामिणं "मां'' प्रतीतिविषयमत्र मन्यामहे । यदि तु मार्तण्डकारा अपि तुरीयं नारायणमेव सर्वत्र मन्यन्ते, तर्हि तु विष्णोरपि कार्यत्वेऽपि रुद्रस्येव न हानिरिति व्यर्थं शिवविद्रोहणम् । अयं भावः— 'स प्राविशत्'' 'सोऽहमि''ति वाक्यद्वयेऽपि तच्छब्देन रुद्रस्यैव ग्रहणम्; प्रकृतत्वात् । इयान् विशेषः –यत् सोऽन्तरादिति वाक्येऽहंकारपरित्यागेनान्तर्यामितुरीयात्मना तस्य ग्रहणं प्रवेशोपपादनार्थम्, अनन्तरन्तु सोऽहमिति साहङ्कारस्य तस्य ग्रहणमिति; यतस्तुरीयस्य प्रवेशनियन्धनं

एवाहम्भाव; न तु स्वतः। सति चैवं नानुपस्थितार्थपरामर्शदोषः समापतति। अत एव—ब्रह्मादिनेव विष्णुनापि तादात्म्यमत्र "यो वै रुद्रः स भगवान् विष्णुर्विष्णुस्तस्मै नमो नमः" इति बोध्यमानमुपपद्यते। अत्र ब्रह्मादिप्रायपाठात् विष्णुरपि कार्य एवेति गम्यते।

मुक्तावहम्भावाननुवृत्तिः।

अनेन हि विज्ञायते– यदहङ्कारसम्बन्धश्चैतन्यस्य काल्पनिकः, न नित्यो न वा मुक्तिकालावस्थायीति। अयमेव च बादरायणाभिमतः शास्त्रार्थ इति— "प्रबुद्धो ह्यभिमन्येत योऽयं नाहमिति प्रभो।"इति मुक्तिदशायामहङ्कारनिवृत्तिप्रतिपादनादवगम्यते। सति चैवं वामदेवादीनामहं मनुरभवमिति साहंकारव्यपदेशानुवादः श्रुतेर्लोकदृष्टिमनुसृत्य; शास्त्रदृष्टया तु निर्मुक्ताहङ्कारं चैतन्यमेवैतादृशस्थलेष्वहं' मामादिपदार्थः। यथाचाहङ्कारस्य मुक्त्यनन्वयेऽपि "अहं मुक्तः स्यामितीच्छोपपत्तिस्तथा श्लोकवार्तिकाद्यवष्टम्भेनाद्वैतदीपिकायामस्मदीयायां व्यक्तं विवेचितम्।

तत्त्वमस्यादिवाक्येषु स्वरूपैक्यनिबन्धनमेव सामानाधिकरण्यम्।

ततश्च स्वरूपैक्यनिबन्धनमेव सामानाधिकरण्यं तत्त्वमस्यादिवाक्येषु, न तु परमात्मनः स्वस्मिन् व्याप्तिनिबन्धनमित्येव बादरायणाशयः, यतो बादरायणाचार्याः स्वयमेवौपाधिक एव– जीवबहुत्व-तदणुत्व-तदनित्यत्व-तत्कर्तृत्व-तदंशत्व-तज्ज्ञानाश्रयत्वादिव्यपदेशो न वस्तुगत्येति विवेचनपूर्वकं "न स्थानतोऽपी"त्यादिसूत्रे ब्रह्मनिर्गुणत्वमेव स्वाभाविकं प्रतिपादयन्ति।

सूत्रेषु भेदपरामर्शस्याद्वैतसिद्धान्ताविरोधित्वम्।

यस्तु—"भेदव्यपदेशाच्च" इत्यादिभिः सूत्रैः सूत्रकारैर्भेदोपन्यासः, स साहङ्कारजीवचैतन्यस्येश्वरस्य च यावन्मुक्ति विद्यमानभेदगोचरः। 'कल्पितभेदपरत्वमेतेषां सूत्राणामि"ति वाक्येन व्यावहारिकसत्यभेदपरतैव विवक्ष्यते, नतु प्रतिभासिकभेदपरता। व्यावहारिकत्वं नाम यावद्ब्रह्मसाक्षात्कारमनुवर्तमानत्वमिति, वामदेवादीनां ब्रह्मसाक्षात्कारानन्तरं कारणेश्वरभावमाप-

न्नानां कारणस्येश्वरस्येवानेकजीववादे ईश्वरभावस्यैव मुक्तित्वात् मायिकाहमाकारवृत्त्या "अहं मनुरभवम्" इत्यादिव्यपदेशो नानुपपन्नः।

असत्यभेदेन सत्यवस्तूपदेशसम्भवः।

एतेन—तयोः कल्पितभेदः प्रतिपाद्य इति त्ववहेयम्। प्रथममेव मोमुह्यमानान् पुरुषान्प्रति तन्मोहशान्तये परमार्थोपदेशाय प्रवृत्तः सूत्रकारो मोहं द्विगुणयत्यपरमार्थोपदेशेनेति कल्पनायोगादिति शङ्कापि—परास्ता; भावानवबोधात्। कल्पितभेदोपदेशवादिनो ह्यद्वैतिनोऽसत्येन भेदेन सत्यवस्तूपदेशं योग्यं मन्यन्ते, यतो विचारं प्रति प्रसक्तिमात्रं विषयाणामपेक्ष्यते, नतु सत्यत्वम्। अधिकं खण्डनखण्डखाद्यतोऽधिगन्तव्यम्। असत्येनापि वस्तुना सत्यवस्तूपदेशो हि बहुतरानुभवसिद्धः। तदुक्तं हरिणा—"उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति। तथाच कल्पितत्वेऽपि भेदस्य परामर्थतो मिथ्यात्वस्यैव विवक्षणात् व्यावहारिकभेदेन सूत्रकाराणां विचारो नानुपपन्नः। सर्वथा तु स्वरूपैक्यनिबन्धनमेव सामानाधिकरण्यं तत्त्वमस्यादिवाक्येषु। शरीरशरीरिभावेन सामानाधिकरण्यस्यापृथक्सिद्धाभेदविषयस्यैव हि कल्पना स्वकपोलकल्पना, नतु स्वरूपैक्यनिबन्धनस्य सामानाधिकरण्यस्य।

शरीरशरीरिभावनिबन्धनसामानाधिकरण्यनिरासः।

न हि कुत्रापि प्रवेशननिबन्धनं सामानाधिकरण्यं नियन्तृस्वाधीनं वा मुख्यं दृष्टचरम्। अहं गच्छामीत्यादावपि शरीरस्य चैतन्येऽध्यासनिबन्धनमेव सामानाधिकरण्यम्। सामानाधिकरण्यं हि विशेषणविशेष्यभावनिबन्धनं बाधानिबन्धनमभेदनिबन्धनं चेति त्रिविधमेव "नीलं घटमानय" "इदं रजतम्" "उद्भिदा यजेत" "सा वैश्वदेवी आमिक्षा" इत्यादौ वा दृश्यते। तत्र सत्यं शुक्तिरजतादिपारमार्थिकनाभिमानिनां मते बाधायां सामानाधिकरण्यं विप्रतिपन्नम्, अभेदे तु तन्न विप्रतिपन्नमिति न दोषः। सर्वविज्ञानयाथार्थ्ये हि "अहं स्थूलः" "अहं गच्छामीत्यादिविज्ञानं गौणसामानाधिकरण्यगोचरमिति वक्तव्यम्। नहि गन्तृत्वादिकमात्मधर्मः। गौणी कल्पना तु प्रसिद्धभेदयोरेव वस्तुनो-

भवति नान्यत्रेति व्यक्तमिदं भामत्यादौ। यावत्तत्त्वसाक्षात्कारं शरीरात्मभेदस्तु कस्यापि न प्रत्यक्षः, साक्षात्कारानन्तरं तु न शरीरमेव समस्ति। तदुक्तम्—"अशरीरं शरीरेष्वि" ति। अनेन चेदमेव विज्ञायते—यत् ब्रह्माशरीरमेव सत् कथं सर्वशरीरं भवतीति? अन्तर्यामिब्राह्मणं तु नियम्यत्वेन शरीरसमानत्वेन शरीरमिव पृथिव्यादिकं विषयीकरोति, नतु पारमार्थिकं शरीरशरीरिभावम्। अधिकमस्मदीयपरिभाषाव्याख्यायामुपसंहारे भूमिकायां च व्यक्तम्। तदिदं सिद्धमशरीरस्य ब्रह्मणो जीवादिभिस्सामानाधिकरण्यं न शरीरशरीरिभावनिबन्धनम्। नह्यन्यव्याप्त्याऽन्यस्य सामानाधिकरण्यसम्भवः।

"सर्वगत्वादनन्तस्ये"ति वाक्ये तुरीयेनैव प्रह्लादस्य सामानाधिकरण्यानुभवव्यवस्था।

"सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इत्यत्रापि सर्वगत्वमेवानन्तस्य स्वेन सामानाधिकरण्यप्रयोजकं मन्यते, सर्वगत्वं हि सर्वत्रानुवर्तमानत्वमधिष्ठानत्वरूपमेव। नहि लक्ष्मीपतेः पुण्डरीकाक्षस्य वा तेन रूपेण प्रवेशः। अत एव—मत्तः सर्वमहं सर्वमित्युपपद्यते। अत्र ह्यहम्पदेन स्वरूपचैतन्यमात्रविवक्षणेनैव "अहं सर्वमि"त्युपपद्यते, यतस्तदेव सच्चिदानन्दरूपेण सर्वत्रानुगतम्। यथाच शास्त्रदृष्टिसिद्धमात्मस्वरूपमशरीरं तुरीयमेवाहङ्कारादिसम्बन्धवर्जितम्, तथा पूर्वमेव विवेचितम्। सर्वथातु विष्ण्वभिप्रायं न तत्त्वमसीति सामानाधिकरण्यमिति तु निष्कर्षः। सति चैवम्—"अहं मनुरभवम्" "अहमेव वर्तामि" इत्यादिवामदेवरुद्रादिवाक्यं न तुरीयनियम्यतया तत्र तत्र स्तुतं विष्णुं शास्त्रदृष्ट्यात्मानं विषयीकरोतीति, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रे तन्त्रेण वामदेवपदेन रुद्रस्यापि ग्रहणेनाथर्वशिरउपनिषदर्थसंग्रहणेन रुद्रान्तर्याम्यपि विष्णुरिति गम्यत" इति सिद्धान्तमार्ताण्डोक्तिरपि—प्रत्युक्ता; यतो नोक्तेनोपनिषद्वचनेन विष्णुरत्र रुद्रान्तर्यामीति गम्यते, प्रत्युत विष्णोरेव चान्तर्यामी रुद्र इति गम्यते। अत एव तत्र ब्रह्मादिभिरिव विष्णुनाऽपि रुद्रस्य सामानाधिकरण्यं बोधितमुपपद्यते।

"अहं मनुरभवम्" इत्यादि वामदेवादिवाक्येऽविरोधसमर्थनम्।

यत्तु—वामदेवस्य हि तथा व्यवहारः ब्रह्मसाक्षात्कारनिबन्धनस्तत्र श्रुतः। अद्वितीयब्रह्मसाक्षात्कारे च सकलभेददर्शननिवृत्तेर्भवदभिमतत्वात् स्ववाक्यैकदेशविरोधः, जीवन्मुक्तत्वाद्वामदेवस्याविरोध इति कल्पना तु न संभवति; ज्ञाने सत्यज्ञानानुवृत्तिवादस्य बाधितत्वात्" इति सिद्धान्तमार्तण्डकाराणां वाक्यजालम्, तदिदं वामदेववाक्यगताहंपदस्य शास्त्रदृष्टतुरीयचैतन्यरूपात्मपरत्वात्, तस्य च मन्वादिभावाविरोधादनवसरम्। अन्यथा मार्तण्डकारमतेऽपि वामदेवस्य लोकसिद्धस्वस्वरूपेण मन्वादिभावासंभवात् कथं न स्ववाक्यैकदेशविरोधः? "तद्धैतत्पश्यन् ऋषिर्वामदेवोऽहं मनुरभवमि"ति श्रुतेरयमनुवादः। श्रुतिश्चात्राहंपदेन लक्षणया चैतन्यमात्रानुभवं तदीय 'महं मनुरभवम्" इत्यादिरूपेणानुवदितुं शक्नोत्येव। अनेन ह्यनुवादेन श्रुतिः सर्वात्मभावमेव वामदेवस्य प्रतिपादयति, न तु भेददर्शनमिति कथं वाऽत्र विरोधशङ्कापि? अयमाशयः—किमत्र मुक्तावहम्भावानुवृत्तिर्विरुद्धेति मन्यते, उत वामदेवपदव्यवहार्यत्वम्। अहंपदेनात्र शुद्धस्यैव चैतन्यस्य विवक्षणात् भूतपूर्वगत्याऽहंपदेनेव वामदेवपदेनापि श्रुत्योपदेशो बाधकाभावाच्च न कोऽपि विरोधः। वस्तुतस्तु मुक्तावपि यावत्सर्वमुक्ति जीवानेकत्ववादे ईश्वरभावात् तस्यैव मायिकाहम्भावव्यपदेशो न दोषाय। "मामुपास्वे"ति मांशब्देनैव परमात्मन उपदेशनिमित्तमपि प्रत्यगात्मस्वरूपमेव ब्रह्म न ततोऽतिरिक्तमिति सूचनमेव। सर्वथातु—"अहं मनुरभवमि"ति निर्देशो न लोकसिद्धात्माभिप्राय इति तत्त्वम्। लोकसिद्धो ह्यात्मा भेदर्शनमर्हति, न तु श्रुतिसिद्ध इति न तद्दृष्ट्या भेददर्शनानुवृत्तिरपि वर्तते। व्यवहर्तृदृष्ट्यातु कल्पितो भेदः शुद्धेऽपि ब्रह्मणि न दोषावहः। तदुक्तम्— 'अक्षमा भवतः केयं साधकत्वप्रकल्पने। किन्न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्" —इति। तथाच —"अहंमनुरभवमि"ति नेदं वामदेववाक्यम्, किन्तु शुद्धचैतन्याभिप्रायेण श्रुतिवाक्यमिति निष्कर्षः।

सर्वत्रप्रसिद्धाधिकरणस्यापि सिद्धान्तमार्तण्डकारानानुगुण्यम्।

एतेन —"सर्वत्र प्रसिद्धोपदेशात्" इत्याद्यपि व्याख्यातम्। सर्वतादा-

त्म्यं हि यत्र भवति, तदेवात्र ब्रह्मस्वरूपमिति सर्वसम्प्रतिपन्नम् । तच्च तुरीयमेवे-त्यत्रैव सुबालोपनिषदमाथर्वशिखोपनिषदां पुरुषसूक्तानां च तात्पर्यमिति विवेचि-तमिति न "सर्वं खल्वि"ति वाक्येऽपि विष्णोरेव विवक्षेति युक्तम् ।

"अत्ता चराचरग्रहणादि"त्यादिसूत्राणां विष्णुपरत्वासम्भवः

"अत्ता चराचरग्रहणात्" इति सूत्रं तु संहर्तृस्वरूपलिङ्गोपस्थापनद्वारा तुरीयमेव ब्रह्मस्वरूपं "यस्य ब्रह्म च क्षत्रं चे" ति वाक्यप्रतिपाद्यं गमयति, नतु संरक्षणैकदीक्षं विष्णुम् । यथाच कठवल्या अपि विष्णुपदघटितायाः प्रकृतेन मतेनैकवाक्यता, तथा बहुशो विवेचितम् । एतेन—गुहाधिकरण-मपि—व्याख्यातम् । सुबालोपनिषदाद्यनुसारेणैव सर्वत्र पुरुषपदार्थस्य विष्णुत्व-मुत्तराधिकरणादिषु प्रतिपाद्यत इति समालोचितप्रायमिमं विषयं न पिष्टपेषणे-न समालोचयितुमिच्छामः । तदयं निष्कर्षः—सुबालोपनिषत्पुरुषसूक्ताद्येक-वाक्यतया सर्वेषां वाक्यानां कारणपराणां विष्णुपरत्वमिति व्याससिद्धान्त-मार्तण्डकारा मन्यन्ते । इदं तूक्तेन प्रकारेण नोपनिषत्तात्पर्यविषय इति, न विष्णूत्कर्षपरतया प्रथमाध्यायस्य ब्रह्ममीमांसागतस्य योजनं क्षोदक्षमं भवतीति प्रतिभाति । यतः—महाभारतेऽपि तुरीयमेव ब्रह्म नारायणशब्दवाच्यं प्रतिपा-द्यते बादरायणाचार्यैः ।

केवलब्रह्मानुपादानत्वे सांख्यप्रत्यवस्थानासम्भवः

द्वितीयाध्याये हि सूत्रकाराः प्रथमाध्यायसिद्धे कारणस्वरूपे सांख्यादि-स्मृति-युक्त्यनुभवविरोधमाशङ्क्य समादधत इति वस्तुस्थितिः । इदं प्रथमा-ध्यायव्यवस्थापितस्य कारणस्य ब्रह्मणः स्वरूपत उपादानत्वपक्ष एव सावसरम्, नान्यथा ब्रह्मात्मकप्रकृतिपरिणामवादस्य प्रथमाध्यायप्रतिपादितत्वे । तत्र हि साङ्ख्यादिमत इव प्रकृतेरेव मुख्यमुपादानत्वमिति, न साङ्ख्यस्मृत्या योगस्मृत्या वा विरोधशङ्कापि—प्रसरति । सत्यं न साङ्ख्य—योगस्मृत्योः प्रकृतेः ब्रह्मात्मकत्वमूरीक्रियते, श्रीभाष्यादिमते तु तदस्वीक्रियत इति समस्ति विशेषः, परन्तु प्रथमाध्यायप्रतिपाद्यं न प्रकृतेर्ब्रह्मात्मकत्वम्, किन्तु कारणं ब्रह्मस्वरूप-मेवेति, ब्रह्मकारणत्वे विरोधशङ्कानिरसनमेव द्वितीयाध्यायकार्यम्, नतु प्रकृते-

ब्रह्मात्मकत्वं संभवति वा न वेति । न हि कुत्राप्यधिकरणे प्रथमाध्याये ब्रह्मात्मकप्रकृतिपरिणामवादः समर्थितः । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति हि ब्रह्मण एव स्वयं प्रकृतित्वं सूत्रयन्ति, नतु ब्रह्मात्मकप्रकृतेरिति सर्वविदितमिदम् । सति चैवं ब्रह्मणः प्रकृतेश्च शरीरशरीरिभावसमर्थनेनाविरोधसमर्थनमाकस्मिकमेव संपद्येत । ततश्चेदमत्र नियतं स्वीकर्तव्यम्—यत् ब्रह्मप्रकृतित्वमेव प्रथमाध्यायवस्थापितं साङ्ख्यस्मृतिविरोधेनानुपपन्नमाशङ्क्यत इति । केवलं ब्रह्मोपादानत्वव्यवस्थापनं च न श्रीभाष्यदिशा भवति, किन्तु भगवत्पादभाष्यदिशैवेति साङ्ख्यप्रत्यवस्थानमसम्भवदुक्तिकं स्यात् श्रीभाष्यमतस्यैव सूत्रारूढत्वे । सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम्, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति श्रीभाष्यसिद्धान्ते हि न विशेष्यांशस्य ब्रह्मणः कारणकोटौ कार्यकोटौ वा प्रवेशेन परिणामिपरिणामभावः, किन्तु विशेषणभूतयोः सूक्ष्मस्थूलचिदचिनोरेवेति तयोर्विशिष्टयोर्वा सलक्षणत्वात् कार्यकारणभावे न साङ्ख्यानां प्रत्यवस्थानं सम्भवदुक्तिकम् ।

उपोद्घातत्वेन केवलब्रह्मपरिणामवादस्वीकारात्

अद्वैतमते साङ्ख्यप्रत्यवस्थानोपपत्तिः

अद्वैतमते तु —सत्तात्रैविध्यवादः सत्तैक्यवाद इति मतद्वयं वर्तते । तत्र प्रथममते घटादीनां ब्रह्मणः शुक्तिरूप्यादीनां च व्यावहारिकं पारमार्थिकं प्रातिभासिकं च सत्त्वं पृथक् पृथगूरीक्रियते । द्वितीयमते तु ब्रह्मण एव सत्त्वम्, घटादीनां तु सत्तादात्म्यमात्रम्, न सत्त्वमिति सिद्धान्तः । तत्र, मतद्वयेऽपि ब्रह्म विवर्तोपादानमेव वस्तुगत्या । तत्र प्रथममते कार्यविषमसत्ताककारणत्वेन विवर्तोपादानत्वम्, द्वितीयमते परिणममानाविद्याविषयरूपकारणत्वेनेति तु विशेषः । इयं हि विवर्तोपादनत्वप्रक्रिया बाधायां सामानाधिकरण्योपपादनावसरे नियतमपेक्षिता । विवर्तमान-विवर्तयोरेव हि बाधायां सामानाधिकरण्यम् । विवर्तमानत्वविवर्तत्वादिप्रक्रिया हि कथञ्चन युक्तिभिर्ब्रह्मेतरबाध्यत्वादिनिर्णयानन्तरमेव विशिष्टमादरमर्हति । तावत्पर्यन्तं तु सामानाधिकरण्यं विशेषणविशेष्यभावप्रयुक्तमेव मृद्घटयोरिव परिणामिपरिणामभावेनैव निर्वहणीयमित्युपोद्घातत्वेन

ब्रह्मपरिणामवादोऽपि विचारावसरे समादरमर्हति। परिणममानत्वमपि ब्रह्मण इदम्, स्वत एव ब्रह्मण एव परिणामित्वेनैव निरवयस्यापि बादरायणाचार्योस्समादरणीयं मन्यन्ते, नतु परिणममानप्रकृतिशरीरकत्वमात्रेण। अत एव—"कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वे"ति पूर्वपक्षोपपत्तिः। अन्यथातु परिणममानप्रकृतिशरीरकत्वे नोक्तशङ्काया उत्थितिरपि। सर्वथातु ब्रह्मपरिणामितावादोऽपि व्यवहारदृष्ट्या सूत्रकारसम्मत इति वस्तुस्थितिः। व्यक्तं चैतदाकर एव—"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इति सूत्रे। सति चैवम्—अद्वैतमते ब्रह्मण एव परिणामित्वस्य वक्तव्यत्वात् तस्य च विलक्षणस्य तत्त्वासम्भव इति साङ्ख्यानां प्रत्यवस्थानं सम्भवदुक्तिकमेव।

विवर्तवादेऽपि साङ्ख्यप्रत्यवस्थानोपपत्तिः

विवर्तवादेऽपि त्वद्वैताभिमते नोक्तं प्रत्यवस्थानमसम्भवदुक्तिकम्; यतस्तत्राप्यधिष्ठानारोप्ययोरपेक्षितमेव सालक्षण्यम्; नहि शुक्तिशकल इवेङ्गालेऽपि रजतारोपो दृष्टचरः। एतेन—विवर्तपक्षे प्रथमाध्यायद्वितीयपादेऽदृश्यत्वाधिकरणादौ साधिते कथं द्वितीयाध्यायप्रथमपादे तद्विरुद्धं परिणामवादमाश्रित्य पूर्वपक्षः सिद्धान्तश्च सङ्गच्छत इति शङ्कापि परास्ता; अविरोधात्, अदृश्यत्वाधिकरणादौ हि चेतनं कारणमित्येतावन्मात्रमुपक्षिप्तम्, नतु तत् परिणामि विवर्तमात्रं वेति निर्धारितम्। निर्धारणं तु द्वितीयाध्यायप्रथमपाद एव भविष्यति। तत्र व्यवहारदृष्ट्या परिणामवाद इति—भोक्त्रापत्तिसूत्रे लोकवदिति दृष्टान्तेन, परमार्थतया विवर्तवाद इति "तदनन्यत्वमि"त्यनन्तरसूत्रगतवाचारम्भणपदेन गम्यत इत्याद्याकर एव व्यक्तम्। तदनन्यत्वं हि बाधायां सामानाधिकरण्यमिति वाचारम्भणश्रुतिसमालोचनकालिकमेव सूत्रकारेण सूच्यत इति वस्तुस्थितिः। तथाच यावत्तत्समालोचनं परिणामवाद एव भूमिकारूपेणानुसन्धातव्य इत्यादि संक्षेपशारीरकादितोऽधिकमवगन्तव्यम्। इदमेवाभिप्रेत्यास्माभिरस्मदीयवेदान्तपरिभाषाभूमिकायाम्—कृत्स्नप्रसक्त्यधिकरणविषये "इदं हि सूत्रं व्यवहारदशायां परिणामवादमूरीकृतमाक्षिप्य समाधानार्थं प्रवृत्तम्" इति वर्णितम्। एवं च—"केन सूत्रेणोपादेशि भवद्भ्यः

परिणामो व्यवहारदृष्ट्या, न परमार्थदृष्ट्येति शङ्कापि परास्ता; दत्तोत्तरत्वात्।

विशिष्टब्रह्मकार्यकारणभावस्यासौत्रत्वम्।

तदिदं सिद्धम्—यत्सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम्, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति ब्रह्मणो विशिष्टस्यैव कार्यकारणभाववादोऽयं न सूत्रारूढ इति। नहि कुत्रापि सूत्रे विशिष्टं ब्रह्म कारणम्, विशिष्टं ब्रह्म कार्यमिति सूचितमपि। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "आत्मकृतेः परिणामात्" "तदनन्यत्वमारम्भणशब्दादिभ्यः," "कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा" इत्यादीनि तु केवलस्य ब्रह्मण एवोपादानत्वप्रतिपादनपराणि बहूनि सूत्राणि दृश्यन्ते। वाचारम्भणमिति मिथ्यात्वं हि कार्यमात्रस्य प्रतिपाद्यमानं कारणस्य विवर्तमानत्व एवोपपद्यत इति, तत्त्वसाक्षात्कारानन्तरकालिकीमवस्थां समालोच्य विवर्तवाद इति सूत्रणात् पूर्वत्र 'लोकवत्" इति दृष्टान्तप्रदर्शनाच्च तावत्पर्यन्तं येन केनापि कार्यकारणभावेनाभेदो निर्वहणीय इति, 'कृत्वाचिन्तया' परिणामवादोऽपि भगवत्पादैस्तदनुयायिभिश्च सूत्रारूढो मन्यते। सर्वथातु विशिष्टब्रह्मकार्यकारणभावो न सौत्रः। अत एव—"यतो वा इमानि भूतानि जायन्ते" इति निष्कृष्य भूतमात्रस्य स्थूलचिदचिद्रूपस्य कार्यत्वं प्रतिपाद्यमानमुपपद्यते। यत इति पञ्चमीनिर्देशात्, तद् ब्रह्मेति वाक्यशेषाच्च ब्रह्ममात्रमेव कारणमवगम्यते, नतु विशिष्टं ब्रह्मेति केवलब्रह्म जगतोरेव कार्यकारणभावः सूत्रकारैर्मन्यते। एतेन—"अथोच्येत—चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्यकारणभावात् शरीरभूतचिदचिद्वस्तुगतत्वाच्च दोषाणां न शरीरिणि ब्रह्मणि कार्यावस्थे कारणावस्थे वा प्रसङ्ग इति, तदयुक्तम्; जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवाऽसम्भवात्" इत्यादि श्रीभाष्यवाक्यान्यनवलोकितानि भवद्भिरि"ति शङ्कापि—परास्ता; इदं हि भाष्यम्—"अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" इति सूत्रगतस्य महनस्याशङ्कासमाधानपूर्वकमुपपादनार्थं प्रवृत्तम्। तेन च सत्यं विशिष्टब्रह्मकार्यकारणभाव एव निरस्यते। तावता चेदमेव सिद्धं भवति—यत् केवलब्रह्म-जगतोः कार्यकारणभावासम्भव एव साङ्ख्येन चोद्यत इति। ततश्चापमा-

शर्योऽवगम्यते—यत् केवलब्रह्म-चिदचित्कार्यकारणभावमादायैव साङ्ख्यानां प्रत्यवस्थानम्, नतु विशिष्टकार्यकारणभावं सिद्धमादाय। इदं च प्रथमाध्याये प्रकृत्यधिकरणेन विशिष्टकार्यकारणभावसाधने निरवकाशमेवेति भवदुट्टङ्कित-भाष्यसमालोचनेऽपि घट्टकुट्यामेव प्रभातम्। वस्तुतस्तु—नेदं भाष्यं विशिष्ट-कार्यकारणभावविषयम्, किन्तु विशेषणस्य शरीरत्वमात्रानुपपत्तिपरमिति तत्प्रकरणत एवेदमवगम्यते। 'अथातो विशिष्टब्रह्मजिज्ञासा'' इत्य-सूत्रणेन ब्रह्मजिज्ञासेत्येव सूत्रणात् सूत्रकाराः केवलब्रह्मवादिन एवेति प्रतीयते। एतेन—केवलात् ब्रह्मणः कार्योत्पत्तिः कुत्राप्यसूत्रितेति शङ्कापि—परास्ता।

केवलब्रह्मकार्यकारणभावोपपत्तिः।

केवलं ब्रह्म कारणमित्यनेन स्वत उपादानत्वं ब्रह्मण एव स्वीक्रियत इत्येव मन्यते, नतु शुद्धं ब्रह्म कारणमिति, येन शुद्धत्वं कारणत्वं च व्याहतमिति शङ्काया अवसरः स्यात्, तेन मायाद्युपधानापेक्षत्वेऽपि न हानिः। तथाच श्री-भाष्यमतेऽद्वैतमते च कारणस्य प्रकृत्युपहितत्वमपेक्षितमिति तु समानमेव। इयान् विशेषः—यत् श्रीभाष्यमते ब्रह्मणः स्वत उपादानत्वमेव न सम्भवति, अद्वैतमते तु तत्सम्भवति। तच्च परिणामित्वमुत विवर्तमानत्वमिति नेदं प्रथ-माध्याये विशिष्य निर्धारितम्। अत एवादृश्यत्वाधिकरणभामत्याम्—''परिणा-मो विवर्तो वे'' ति पक्षद्वयमुल्लिख्यते। ''विवर्तस्तु प्रपञ्चोऽयमि'' ति तत्रत्यविवर्त-पदं तु परिणामस्याप्युपलक्षणम्, यतः परिणामोऽप्यसदृशस्य साधयिष्यते। एतेन—विवर्तबोधकं पदमेकमपि न पश्याम इत्युक्तिरपि—परास्ता; यतो न व-यमदृश्यत्वाधिकरणमेव विवर्तवादस्य साधकमिति वदामः। तदनन्यत्वाधिकर-णादिसिद्धार्थानुवादेनैव हि तस्य प्रवृत्तिः। ''एतद्योनीति भूतानि सर्वाणीत्युपधा-रय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।'' इति गीतावाक्यं हि परिणा-वादस्य विवर्तवादस्य चोभयस्यापि गमकमेव। अयमत्र निष्कर्षः—केवलब्रह्म-कारणतापराणि सर्वाणि भगवद्गीतादिवाक्यानि व्यवहारदृष्ट्या परिणमवादस्य परमार्थतया विवर्तवादस्य चानुकूलान्येव।

केवलब्रह्म-प्रपञ्च कार्यकारणभावेऽद्वैतग्रन्थान्तराद्यविरोधः ।

प्रस्थानभेदाः सर्वेऽप्यद्वैताविरोधिन एव सिद्धान्तलेशे संगृह्यन्ते । येहि खलु तद्विरोधिनस्तेऽप्रमाणमित्येव सिद्धान्तात् परस्परव्याघातोऽद्वैतमत इति रिक्तमिदं वचः । "तदभिध्यानादेव तु तल्लिङ्गात् सः" इत्यादिसूत्रेण पूर्वपूर्वभूतोपहितं ब्रह्मैवोत्तरोत्तरस्य भूतस्य कारणमित्येव भगवत्पादभाष्याशयः । तत्र च केवलस्य ब्रह्मण एव विवर्तोपादनत्वार्थं भूतान्तरोपधानमात्रमुपक्षिप्यते, नतु श्रीभाष्यसिद्धान्तदिशा पूर्वपूर्वभूतपरिणामित्वमात्रेण ब्रह्मणोऽपि तच्छरीरकत्वमात्रेण वा कारणत्वव्यपदेशमात्रम् । कारणत्वं हि ब्रह्मणः परिणामित्वं विवर्तमानत्वं वा कल्पितमेव, न पारमार्थिकमिति नाद्वैतमते मतान्तर इव ब्रह्मसविकारत्वं तत्सद्वितीयत्वं वा समापद्येत । उपहितब्रह्मकारणतावादो ह्यद्वैताभिमतो मायाद्युपधानमात्रं निमित्ततया परिणामितया वाऽपेक्ष्यत इति सूचनार्थमेवेति, केवलब्रह्मकारणतावादे न तत्प्रतिकूलम् । कार्यत्वं तु भूतानामेव केवलानाम्, नतु तद्विशिष्टस्य ब्रह्मणः कुत्राप्युपक्षिप्तमिति न "तदभिध्यानादेवे" ति सूत्रभाष्यं भगवत्पादीयं श्रीभाष्यसिद्धान्तपरिपोषकम् ।

मायापरिणामवादव्यवदेशोपपत्तिः ।

अयं भावः—परिणामवादो द्विविधोऽद्वैतमते व्यवहारदृष्ट्या ब्रह्मपरिणामतावादः वस्तुगत्या मायापरिणामवादश्च । तत्र प्रथममते न विवर्तोपादानतया ब्रह्मविवक्षा, द्वितीये तु ब्रह्म विवर्तोपादानम् । ब्रह्मविवर्तश्च मायापरिणामं विना न सम्भवन्तीति, तत्र तत्र मायाकारणत्वव्यपदेशोऽपि न बाध्यते । तथाच तत्र तत्र मायोपहितकारणतानिर्देशेन सूत्रकारा भगवत्पादा वा विमर्शोक्तरीत्या न विशिष्टकारणतादिपक्षपातिनो भवन्ति । मायाविशिष्टं ब्रह्म परिणामिकारणमिति नागमवेदिनां राद्धान्तः" किन्तु माया परिणामिकारणम्, ब्रह्म तु विवर्तकारणम्, ब्रह्मैव वा परिणामिकारणम्, माया तु निमित्तकारणमात्रमिति । साङ्ख्यस्मृतिप्रत्यवस्थानं तु केवलस्य ब्रह्मण एवोभयविधमपि कारणत्वमवलम्ब्यैवेति पूर्वमेवोक्तत्वात् न दोषसाम्यम् । एतेन—साङ्ख्यप्रत्यवस्थानासम्भवप्रश्नो भवत्पक्षेऽपि मायाविशिष्टब्रह्मकारणतायाः स्वीकारात्स-

मानः, चैतन्यमात्ररूपस्य ब्रह्मणश्चैतन्यमानन्दादिकं घटादिषु नोपलभ्यत इति विमर्शोक्तमपि—परास्तम्। नहि भवन्त इवाद्वैतिनोऽपि ब्रह्मणः कारणकादावप्रवेशं मन्यन्त इति विशेषस्तु मतद्वयेपि स्पष्ट एव। चैतन्यानन्दादितादात्म्येन घटो भाति' "घट इष्ट" इत्यादिप्रतीतिरपि विद्यत एव। इयान् विशेषः—यत् ब्रह्मणः स्वतश्चैतन्यादिरूपत्वम्, घटादीनां तु तत्तादात्म्यमात्रमध्यस्तमिति। सर्वथातु न मायापरिणाममात्रेण ब्रह्मकारणत्वव्यपदेश इति तु निष्कर्षः।

घटादीनां चैतन्यप्रकारतयैव भानात्तस्यैव तच्छरीरकतया भानरूपत्वात्
घटादिशब्देन घटावच्छिन्नस्य चैतन्यस्यैवाद्वैतमते ग्रहणाच्च
श्रीभाष्याद्वैतभाष्ययोरविशेषशङ्कासमाधाने।

यत्तु—"घटशब्दाद्भवन्मते घटावच्छिन्नस्य चैतन्यस्यैव ग्रहणम्, अनेन च घटस्य स्वतो न भानम्, किन्तु घटप्रकारकस्य सत एव भानम्, सर्वदा घटः सद्विशेष्यकज्ञानप्रकार एव भासत इति यथा भवन्मतप्रक्रिया, एवमस्मन्मतेऽपि स्थूलचिदचितां ब्रह्मप्रकारतयैव भानात् तेषां स्वतो न व्यवहार इति घटविशिष्टं ब्रह्म कार्यमित्युच्यते। एवंच भवन्मतेऽपि विशिष्टब्रह्मणोरेव कार्यकारणभावात् उक्तप्रत्यवस्थानासम्भवदोषस्तदवस्थ" इति—शङ्क्यते, तत्रेदमेव समाधानम्—सत्यमद्वैतिनां मते घटादिकं न विना चैतन्यरूपमधिष्ठानं भासमानं भासते। "न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इति तत्सिद्धान्तात्। नहि विनाऽधिष्ठानज्ञानमारोप्यमात्रविषयकं भानं शुक्तिरूप्यादिस्थले दृष्टचरम्। इदमेवाभिप्रेत्याद्वैतिनो निर्विकल्पकं सन्मात्रावगाहि, घटादिज्ञानं तु सविकल्पकमेवेति मन्यन्ते। इयमेव प्रक्रिया यदि श्रीभाष्यकारैरपि मन्यते, तर्हि व्यर्थं सन्मात्रविषयकनिर्विकल्पकवादनिरसनं श्रीभाष्यकाराणां महासिद्धान्ते। अनेन ह्येदं प्रतीयते—यत् विना घटादिकमपि चैतन्यमात्रभानमद्वैतसम्मतमिति। तच्च सूक्ष्मचिदचित्प्रकारकतयैव चैतन्यभानमिति श्रीभाष्यसिद्धान्तादद्वैतभाष्यस्य विशेषं विना नोपपद्यते। सति चैवम्—सन्मात्रचैतान्याध्यस्तत्वात् कल्पितेन सत्तादात्म्येनैव घटादिकं भासत इत्येवाद्वैतसिद्धान्तः फलति। अत्र चाधिष्ठानं

भ्रमस्थले नोत्पद्यते,किन्तु तत्तादात्म्यं तत्तादात्म्यापन्नं प्रतिभासिकमारोप्यं चैवोत्पद्यत इत्येवाद्वैतसिद्धान्तात् न भवन्मत इव घटविशिष्टं चैतन्यं कार्यमित्यद्वैतमतमिदम्। तन्मते हि घटादीनामध्यस्तानामेव प्रतीतेर्न निर्विकल्पकप्रतीतिविषयत्वमित्येव मन्यत इति सत्यं सद्विशेष्यकज्ञानप्रकार एव घटो भासते। इदमेव यदि श्रीभाष्यकारैरपि मन्यतेऽद्वैतमताविशेषोपपादनार्थम्, तर्हि तु न विवादलेशोऽपि; घटादिमिथ्यात्वाभ्युपगमात्, सूक्ष्मचिदचिच्छरीरकतयैव ब्रह्मभानास्वीकाराच्च। सद्विशेष्यकज्ञानप्रकारतयैव घटादीनामद्वैतमत इव ब्रह्मप्रकारतयैव श्रीभाष्यमते घटादीनां भानमित्येतावन्मात्रे साम्यविवक्षा तु विनाऽधिष्ठानज्ञानमारोप्याभानमिव स्वरूपतोऽपि शरीरस्य विनाऽऽत्मभानमभाने सति सं भवति। नचैतदस्ति; नहीदं रजतं न" "नात्र रजत" मित्यादिवत् ब्रह्मात्मकं घटादिकं नश्वरम्, आत्मप्रकारभूतं शरीरं नष्टमित्येव प्रतीतिः। नह्यद्वैतमत इव घटादीनां सद्रूपब्रह्मतादात्म्यमात्रम्, न सत्त्वमिति सिद्धान्तः। ब्रह्मसत्तयैव हि घटादीनामद्वैतमते सत्ता। इदं विवर्तवादाभिप्रायेण। भूमिकारूपे परिणामवादे तु घटादीनां ब्रह्मणश्च सत्तासामान्ययोगित्वमेव सत्त्वं मिथ्यात्वाविरोधि स्वीक्रियत इति घटपदेन घटावच्छिन्नं चैतन्यं विवक्ष्यत इत्यादिप्रक्रियैव न स्वीक्रियते। जीवानां स्वरूपत एव नानात्वानङ्गीकारात्तु सूक्ष्मचिद्विशिष्टं कारणं स्थूलचिद्विशिष्टं कार्यमिति श्रीभाष्यकाराणामद्वैतानभिप्रेतैव प्रक्रिया वर्तत इति कथं वा श्रीभाष्याद्वैतभाष्ययोः साम्यचर्चाऽवसरति? नह्यधिष्ठानारोप्यभावेऽधिष्ठानव्यतिरेकेणारोप्याभाव इव शरीरशरीरिभावे शरीरिव्यतिरेकेण शरीरभावः श्रीभाष्यकाराभिमतः। अपृथक्सिद्धिसिद्धाभेदस्तु परिभाषिक एव श्रीभाष्यकाराणाम्। सर्वथा तु नाद्वैत-श्रीभाष्यमतयोर्ब्रह्म-प्रपञ्चकार्यकारणभावे साम्यं घटादिविशिष्टत्वेनैव कार्यत्वविषये।

स्वरूपत एव ब्रह्मकारणत्वादपि मतान्तरादद्वैतमतस्य विशेषः

वस्तुतस्तु—शुक्त्यवच्छिन्नं चैतन्यमिव रजतादेर्मृदवच्छिन्नं चैतन्यं न घटादिकारणम्, किन्तु मूलाज्ञानविषयः शुद्धचैतन्यमुपहितचैतन्यं वैव कारणमिति भगवत्पादमतम्। तथाच कारणस्य चैतन्यस्य विशिष्टरूपेण न कारण-

त्वमिति, 'विशिष्टयोरेव कार्यकारणभाव इत्यद्वैतमतप्रक्रिये''ति वेदान्तसाराव-ल्यनुसारिणो शङ्कापि निरवकाशैवेति "नविलक्षणत्वाधिकरणो"त्थितिः केवलब्रह्म-जगतोः कार्यकारणभावपरेऽद्वैतवाद एव, यत्र परिणामवादोऽपि नासम्मतो भूमि-कारूपेण, सम्भवति ।

### विवर्तवादमाश्रित्यापि नविलक्षणत्वाद्यधि-करणोत्थितिसमर्थनम् ।

भामनीकारादयस्तु विवर्तवादमाश्रित्यापि "नविलक्षणत्वा"धिकरणो-त्थितिसम्भवमरुद्दयत्वाधिकरणादौ सूचयन्तः भाष्यकाराणामद्वैतपक्षपातिनां नावश्यमन्तव्यः परिणामवाद इति मन्यन्ते । "कृत्स्नप्रसक्त्यधिकरण मपि निर्विशेषचैतन्यस्य विवर्तमानत्वे मुक्तावपि प्रपञ्चोत्पत्त्यापत्तिः । साक्षात्कारपूर्व-क्षण इव स्वयं प्रकाशमानत्वं साक्षात्कारानन्तरमपि समानमेव । साक्षात्कार-पूर्वक्षणेऽज्ञानं वर्तत इति कल्पना तु न सम्भवति, निरवयत्वेनतु केनचन रूपेण भानमंशान्तरेणाभानमिति ज्ञानाज्ञानयोरुभयोरपि कल्पना न संभवतीति "कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वे" ति सूत्रार्थः । "श्रुतेस्तु शब्दमूलत्वात्" इत्यस्यापि यथा विवर्तोपपत्तिस्तथा कल्पनीयमिति वाक्यार्थः ।

### "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"त्यस्य विवर्तोपादानतया योजनम् ।

एतेन "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रमपि प्रकृतिपदे-नाविकार्युपादानविवक्षणात् विवर्तवादस्यैवानुगुणम् । अत एव आत्मकृतेः परिणामात्'' इत्यात्मकृतिः परिणामश्चोभयं प्रतिपादितमुपपद्यते । अनेन हि विकारात्मना भानमेव परिणामः, नतु तदात्मना मृदादीनामिव विकारित्वमिति विज्ञायते इत्यात्मन एव संकल्पमात्रेण प्रपञ्चभाव इति, "बहु स्यां प्रजायेय"इति श्रुत्यर्थ एवानूद्यत इति वक्तव्यम् । "प्रत्यगात्मविषयत्वाच्च बहुभवनाभिध्यानस्ये" ति भाष्यमत्रैवानुकूलम् । आत्मकरणं नाम संकल्पवशात्तदात्मना भानमात्रम् ।

तदुक्तं भाष्ये—"पूर्वसिद्धोऽपि सन्नात्मा विकारात्मना परिणामयामासात्मा-नमि''ति । स्वसंकल्पवशेन स्वस्यैव क्रियमाणत्वं हि स्वाभाविकस्वरूपविपरिवृत्ति-

विवक्षायामसम्भवद्युक्तिकम् । तथाच—आत्मकरणमत्र स्वरूपपरिणामयितृत्वेनैव, नतु स्वस्य विकारकरणेनेति सूचनार्थमेव आत्मकृतिपदं परिणामपदं च ।

अनेन च क्रियमाणत्वं परिणम्यमानत्वं चैकस्यैव प्रतीयते । तच्चात्मन एव ब्रह्मरूपस्य परिणामित्वं विना नोपपद्यत इति, प्रकृतिपरिणामेन ब्रह्मोपादानतावादे नेदं सूत्रं सङ्गतं भवति । परिणामशब्देन ह्यत्र तद्भाव एव विवक्ष्यते । तथाच श्रुतिः—"सच्च त्यच्चाभवत्" इति । तद्भावो नाम तत्तादात्म्यमात्रमेव, नतु तदात्मना विकारित्वम् स्वस्यापि कार्यत्वरूपम् । सति चैवम्—आत्मकृतेरिति परिणामादिति च सार्थकम् । नहि मृदादिषु परिणामिषु स्वस्यैव कार्यत्ववर्णनेन स्वव्यतिरेकेण कार्यस्वरूपनिषेधोऽपि सूच्यत इति विवर्तवाद एव पर्यवसानम् । श्रीभाष्यमते तु ब्रह्माविनाभूत-प्रकृतिपरिणाम एव ब्रह्मपरिणाम इति क्लिष्टमेव योजनम् ।

अयं भावः – रज्जुसर्पादिस्थलेऽपि विना विकारमन्यस्यान्यभावेऽपि परिणामशब्दः प्रयुज्यते इति, ब्रह्मणो विलक्षणप्रपञ्चभाव एवात्र परिणामपदार्थः । उभयसम्मतमिदम्—यत् ब्रह्मणो निर्विकारस्य विकाररूपावस्थान्तरभावो नात्र परिणामपदार्थः संभवतीति । सति चैवमन्यात्मना भानमात्रेण परिणामपदप्रयोग एवात्र स्वीकर्तव्यः । मृत् घटात्मना परिणमत इतिवत् "रज्जुः सर्पात्मना परिणमते," "तडाकोदकं केदारात्मना परिणमते" इत्यादि बहुतरप्रयोगदर्शनात् मृदादिसमानयोगक्षेममेव परिणामिकारणत्वमङ्गीकर्तव्यमिति न नियमः । सर्वथा तु—आत्मन एव कार्यत्वं परिणामित्वं च सूत्रकारनिर्दिष्टं न श्रीभाष्यमते, यत्र विशिष्टस्य ब्रह्मणः, तत्रापि विशेषणांशस्यैव परिणामित्वं, क्रियमाणत्वं च, न तत्रापि तु स्वविशेषणस्य प्रकृतेः, किन्तु स्थूलचिदचिदामेव भवति, नत्र स्वरसम् ।

परिणामादिति सूत्रस्य विवर्तवादे न स्वारस्यमिति तच्छङ्कासमाधाने ।

एतेन—'परिणामात्' इत्यादिसूत्राणामद्वैतमते न स्वारस्यमिति शङ्कापि—परास्ता । इयं हि शङ्का विमर्शकाराणां यदि स्वमत एव स्वारस्यं भवतीत्युपपादनार्था, तर्हि तु बाधितम् । नहि तन्मते ब्रह्मणः स्वतत्तद्भावमात्ररूपोऽपि परिणामोऽन्योऽपि वा परिणामः । यदि तु शुद्धाद्वैतवाददृष्ट्या, तर्हितु विकारि-

त्वापत्तिसन्मतनिरसनार्थं या किलापाद्यते विमर्शकारैः, सैवास्माकमपि समापत्तिरिति नास्य चोद्यस्यात्रावसरः ।

वस्तुतस्तु—तद्भावपर्यायः परिणामशब्दः । स च क्वचिद्विकारपूर्वकः, क्वचित्तादृश इति त्वन्यदेतत् । शक्यतावच्छेदकं तु तद्भावत्वमेवेति नाद्वैतमते परिणामपदास्वारस्यं केवलविवर्तवादस्यैव स्वीकरणेऽपि । व्यवहारदशायां परिणामवादस्यापि विचारावसरे केषुचनांशेषु प्रपञ्चमिथ्यात्वाद्यनिर्णयदशायामद्वैतमते स्वीकारात्तु नानुपपत्तिलेशोऽपि ।

वस्तुतस्तु—अनुवर्तमानत्वमेव परिणामित्वम् । परिणामिकारणं मृदादिकमपि घटादावनुवर्तत एव । इदं च परिणामित्वं विवर्तोपादान-परिणाम्युपादानोभयसाधारणमेवेति परिणामपदं नाद्वैतमतविरुद्धम् । परिणामस्तु सत्यं व्यावर्तमान एव भवतीति नात्मनः परिणामत्वसम्भवः, परिणामयितृत्वं तु तस्य संभवत्येव । सूत्रगतं परिणामपदं परिणामयितृत्वपरमिति मतद्वयसंप्रतिपन्नमिदम् । अनेन चोपादानत्वप्रयोजकमनुवर्तमानत्वमेव बोध्यत इति वक्तव्यम् । अनुवर्तमानस्य सत उपादानत्वं विवर्तोपादानत्वेनापि भवति, परिणाम्युपादानत्वेनापि ।

वाचारम्भणवाक्यानुसन्धानस्य विवर्तोपादानताविचक्षण एव स्वारस्यम्, उक्तवाक्यार्थपरीक्षा च ।

सूत्रकारास्तु—प्रकृतिश्चेति प्रथमसूत्रे "प्रतिज्ञादृष्टान्तानुपरोधात्" इति "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति वाक्यार्थनिर्णयस्यापि प्रकृतोपादानत्वनिर्णय उपयोगं मन्यन्त इति, यत्र तस्य सार्थक्यं तदेवोपादानत्वमत्र वक्तव्यम् ।

सिद्धान्तमार्तण्डकारादिसम्मतवाचारम्भणश्रुत्यर्थ-तत्समालोचने

तत्र "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति श्रूयते । वाचा-व्यवहारव्याहारोभयार्थं विकारो घटादिः, नामधेयं संज्ञा च स्पृश्यते । "मृन्मयमि"ति पूर्ववाक्यादनुपज्यते । तथाच "घटादिकं मृत्तिके"त्येव सत्यम् प्रमिनमि"ति वाक्यार्थवर्णनेन मार्ताण्डकारा अन्ये च मृद्घटयोः परिणामिपरि-

णामयोरभेद एवोक्तश्रुत्यर्थ इति वर्णयन्ति। अत्र "मृत्तिकापदं कारणब्रह्मोपलक्षणम्, मृन्मयपदं तु कार्यसामान्योपलक्षणमिति जगद्ब्रह्मणोरभेदसाधनं क्रियत" इति तदाशयोऽपि तदीये ग्रन्थे विशद एव।

इदमेवात्रालोचनीयम्—यत् मृद्घटयोरिव ब्रह्मप्रपञ्चयोरेकद्रव्यत्वं किं तन्मतमुत नेति। आद्ये ब्रह्मविकार्यत्वापत्तिः। द्वितीये तच्छरीरसूक्ष्मचिदचितोः स्थूलचिदचितोश्चैकद्रव्यत्वसाधनेन यदि तद्द्वारैकविज्ञानेन सर्वविज्ञानं साध्यते, तर्हि न केवलं क्लिष्टकल्पना, किन्तु दृष्टान्तास्वारस्यमपि। स्वतःपरिणममानमृत्तिकादृष्टान्तेन परिणममानप्रकृतिशरीरकब्रह्मविवक्षणे हि कथं तद्दृष्टान्तस्वारस्यम्? अतः स्वयमनुवर्तमानब्रह्मरूपकारणसत्यत्वविवक्षायामेवोक्तवाक्यस्वारस्यमङ्गीकर्तव्यम्। सति चैवमनुवर्तमानं कारणं सत्यम्, विकारास्तु व्यावर्तमानाः तद्विलक्षणा मिथ्या इति, सत्, परमार्थः, अनुवर्तमानत्वात्, विकाराः, मिथ्या, व्यावर्तमानत्वादित्यनुमानद्वयमेवात्र विवक्ष्यते। सति चैवं वेदैकप्रमाणसिद्धोऽभेदस्तद्व्यतिरेकेणाभावरूपो निरूपितो भवति। परिणामिपरिणामयोरभेदसाधनं हि लोकसिद्धं न श्रुतितात्पर्यविषयतामर्हति। सति चैवं वाचारम्भणशब्दस्य नामधेयशब्दसमभिव्याहृतस्य मिथ्येत्यर्थ एव युक्तः। तथाच कारणव्यतिरेकेण कार्याभावसाधनेन मृत्तिकापदस्य सर्वकारणब्रह्मोपलक्षणत्वस्वीकारेण च ब्रह्मणो विवर्तोपादानत्वसाधने दृष्टान्तस्वारस्यमपि भवति।

अयं भावः—इदं हि वाक्यं नोपादानोपादेययोरभेदबोधनार्थं प्रवृत्तम्, किन्तूपादानमात्रसत्यत्वव्यवस्थापनद्वारा "ब्रह्मविवर्तोपादानत्वसूचनेनैकविज्ञानेन सर्वविज्ञानप्रतिष्ठापनार्थमिति, प्रतिज्ञादृष्टान्तानुपरोधसाध्यमुपादानत्वं ब्रह्मण एव विवक्षितमद्वैतमत एव निर्वहतीति सिद्धम्। मार्ताण्डकारादिसम्मते वाचारम्भणश्रुत्यर्थे वाचापदस्य व्यवहाराध्याहारोभयपरत्वम्, "मृत्तिकेत्येव सत्यमि"त्यत्र मृण्मयपदाध्याहारः, आरम्भणपदेनालम्भपदकल्पना, विकारमात्रस्यैव घटादिरूपस्य कारणेनाभेदसाधनस्याभीप्सितत्वात् नामधेयप्राप्त्युपादानवैयर्थ्यम्, मृत्तिकादृष्टान्तायोग इत्यादीनि बहूनि

दूषणानि । अद्वैतमते तु मृत्तिकापदस्यानुवर्तमानकारणपरत्वात् तेन च प्रातिभासिकव्यावहारिकोभयसाधारणस्योपादानस्य विवक्षणात् प्रातिभासिकमिथ्यात्वस्य तदुपादानसत्यत्वस्य च लोकसिद्धत्वेनासाधनीयत्वेन व्यावहारिकमिथ्यात्वसाधनस्यैव प्रातिभासिकदृष्टान्तेन विवक्षितत्वान्मृत्तिकेतिपदोपादानसार्थक्यम्, पूर्वोक्ताध्याहारादिदोषाभावश्चेति न किञ्चिदनुपपन्नम् ।

तदनन्यत्वसूत्रार्थपरीक्षा ।

इदमेवाभिप्रेत्य सूत्रितम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः इति । तदनन्यत्वपदेन तदभिन्नत्वं यदि विवक्ष्यते, तर्हि तदभिन्नत्वसाधने सिद्धान्तमार्तण्डकाराद्युक्तरीत्या "मृत्तिकेत्येव सत्यमि"त्यस्यैव वाक्यस्याध्याहारेण व्याख्यातस्योपयोगात् "आरम्भणशब्दादिभ्य"इत्यनुपपन्नं भवतीति, तद्व्यतिरेकेणेतरशून्यत्वमित्यद्वैतिनां विवरणमेव युक्तम् । तदनन्यत्वपदेन ह्यद्वैतसम्मतार्थविवरणे हि ब्रह्मेतरमिथ्यात्वं बोध्यते इति,"आरम्भणशब्दादिभ्य इति"सौत्रहेतुस्सर्वथा सार्थकः । न विद्यतेऽन्यत् यस्य तत् अनन्यम्, अनन्यस्य भावोऽनन्यत्वम् । तस्यानन्यत्वं तदनन्यत्वमिति, स्वेतरशून्यत्वं ब्रह्मणो बोध्यते । यद्यप्यत्र साध्यपदे बहुव्रीह्यादिकल्पनेन क्लेश इव प्रतीयते; तथापि सौत्रहेतुपदसार्थक्यार्थं सोढव्य एवायमिति तत्त्वम् । अनेन च वाचारम्भणादिवाक्यस्य परेषां विवरणं सौत्राशयविरुद्धमपीति—सूच्यते । तदिदं सिद्धम्—यत्—"जन्माद्यस्य यत" इति सूत्रोपक्षिप्तं ब्रह्मोपादानत्वं न श्रीभाष्याभिमतम्, किन्तु भगवत्पादाभिप्रेतमेवेति ।

ब्रह्मण एव कारणतावादस्य मनुस्मृतिसिद्धत्वम् ।

यत्तु—"सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत्" इति मनुवाक्यम्, इदं प्रकृतिविशिष्टस्य ब्रह्मण एव शक्त्यात्मना परिणामित्वमिति श्रीभास्करसिद्धान्ताभिप्रायमेव । अद्वैतिनामपि यावत्सर्वमुक्ति जीवानेकत्ववादे ईश्वरभाव एव मुक्तिरिति वादिनां तावन्मात्रेण श्रीभास्करसिद्धान्तेनैकवाक्यता सम्मतैव, यतो न मुक्तौ जीवानां व्यापकानां

पृथक्सत्त्वमीश्वरादङ्गीक्रियत उभयैरपि। विरोधस्तु निर्गुणब्रह्मभावसम्भावनाऽसम्भावनयोरेव। "विशिष्टब्रह्मपरिणामितावादोऽप्यद्वैत सम्मत एव व्यवहारदृष्ट्ये"ति, पूर्वमेतदभिप्रायेणैव भूमिकारूपेण परिणामवादो विवर्तवादाविरुद्ध इति विवेचितम्। तथाच मनुरपि न शरीरपरिणामितामात्रेण ब्रह्मणः कारणत्वं मन्यते। श्रीभास्करसिद्धान्त एवाद्वैताव्यवहितपूर्वतनभूमिकारूपोऽत्र मनुना समुल्लिख्यत इति श्रीकुल्लूकभट्टव्याख्ययाऽप्यवगम्यते।

कुल्लूकभट्टव्याख्याविरोध. श्रीभाष्यमत एव नाद्वैतमते।

इयमत्र कुल्लूकभट्टव्याख्या—अभिध्यानपूर्विकां सृष्टिं वदतो मनोः प्रकृतिरेवाचेतनाऽस्वतन्त्रा परिणमत इत्ययं पक्षो न संमतः, किन्तु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्त एवाभिमतः प्रतिभाति। तथाच छान्दोग्योपनिषत्—'तदैक्षत बहु स्यां प्रजायेय' इति। अत एव शारीरकसूत्रकृता व्यासेन सिद्धान्तितम् 'ईक्षतेर्नाशब्दम्' इति। ईक्षतेरीक्षणश्रवणान्न प्रधानं जगत्कारणम्। अशब्दं न विद्यते शब्दः श्रुतिर्यस्य तदशब्दमिति सूत्रार्थः। स्वाच्छरीरादव्याकृतरूपात्; अव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिः, तदेव तस्य च शरीरम्। अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मा स्थिता अभिधीयन्ते। अव्याकृतस्य च ब्रह्मणा सह भेदाभेदस्वीकाराद् ब्रह्माद्वैतम्, शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते—इति।

अनया हि व्याख्यया श्रीभास्करसिद्धान्त एव त्रिदण्डिमतत्वेनात्र गृह्यत इति, सत्यभेदाभेदवादिश्रीभास्करमतस्य यावदीश्वरभावाख्यमुक्तिपर्यन्तमद्वैतमतेन कथञ्चन भूमिकारूपेणाभ्युपगतपरिणामवादादिना साम्यं वर्तत इति न मनुमतविरुद्धमद्वैतमतम्, किन्तु श्रीभाष्यमतमेव तादृशमिति गम्यते। एतेन—कुल्लूकभट्टव्याख्यायां त्रिदण्डिपददर्शनेन श्रीभाष्यमतमेव मनुमतमिति विमर्शोक्तिरपि—परास्ता। मनूक्तं हि त्रिदण्डिलक्षणम्—"वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते" इति वाक्यसिद्धं न ब्रह्माद्वैतिनामपि न साधारणम्।

"वैधर्म्याच न स्वप्नादिवत्" इति सूत्रमपि—व्याख्यातम्। इदं हि सूत्रं स्वप्नवैधर्म्येण जाग्रद्दशायामर्थसत्त्वं साधयति। तच्च—'स्वाप्निकस्यार्थस्य न प्रतीतिरेवेति तु सत्यम्। जाग्रति तु पृथगर्थानामुपलभ्यमानत्वात् न तद्दृष्टान्ततासंभव—'इत्युपपादनपरमेव। तत्र स्वाप्निकानामर्थानां प्रत्यहं बाध्यमानत्वात् स्वाधिष्ठानचैतन्यव्यतिरेकेणाभावनिर्णयेन प्रातिभासिकत्वमद्वैतिनो मन्यन्ते,—सूत्रकाराश्च "मायामात्रं तु" इति सूत्रयन्तः। तत्र योगाचारमतेऽर्थानामप्रत्यक्षत्वात् अनुमानेन ज्ञानाकारतयैव तेऽनुमीयन्त इति, तद्दृष्टान्तेन जाग्रद्दशायामप्यर्थानामनुमेयतावादिनां तेषामेव निरास एवानेन सूत्रेण क्रियते। तथाचार्थानामुपलभ्यमानत्वेन प्रत्यक्षत्वात् ज्ञानाकारतानुमानं बाधितमित्येव तात्पर्यम्, नतु स्वप्नदृष्टान्तेनार्थमिथ्यात्वनिरासपरमपीदं सूत्रम्।

"वैधर्म्याच्चे"ति सूत्रस्याद्वैतनिरासतात्पर्यत्वायोगः,
श्रीभाष्यमते तत्सूत्रानुपपत्तिश्च।

अद्वैतमते हि स्वाप्निका अपि प्रत्यक्षा जाग्रत्कालिका अपि प्रत्यक्षा इति नानुमानसाध्यमर्थस्वरूपम्। सूत्रकारसाधितस्वाप्निकस्वभावेनैव यदि योगाचारमत इव ज्ञानाकारता साधिता स्यात्, तर्हि सत्यं स्वाप्निकदृष्टान्तेन मिथ्यात्वनिरासेऽपि सूत्रस्य तात्पर्यमूरीकर्तुं शक्यते। न हीदं श्रीभाष्यकारानुयायिभिरपि स्वीकर्तुं शक्यते ; अन्यथा स्वाप्निकानां तन्मतरीत्येश्वरसृष्टत्वात् तद्वैधर्म्येणाकाशादीनामनीश्वरसृष्टत्वे सूत्रकारतात्पर्यं तैरङ्गीकरणीयं स्यात्। सत्यमनेन सूत्रेण वैधर्म्यं स्वाप्निकानां जागरिकाणां च सूत्रकारा मन्यन्ते। नह्यद्वैतमतेऽपि स्वाप्निकानां जागरिकाणां च न वैधर्म्यम्। स्वाप्निकाः व्यवहारदशायामेव बाध्याः, जागरिकास्तु न तथेति सर्वानुभवसिद्धमिदम्। श्रीभाष्यमते तु न किमपीश्वरसृष्टत्वाविशेषाद्वैधर्म्यं स्वाप्निकानां जागरिकाणां चेति "वैधर्म्याच्चे" ति न सङ्गतं भवति। अतोऽपि हेतोः सूत्रकाराः स्वाप्निकमायिकत्वमभिप्रयन्ति। ज्ञानक्षणिकतावादो योगाचाराणां नाद्वैतिनामिति विशेषोऽपि सर्वविदित एव। "क्षणिकत्वाच्च" इति सूत्रेण सूत्रकारा अपीममर्थं सूत्रयन्त्येवेति, योगाचारमतनिरसनेनैवाद्वैतमतनिरासोऽपीति

सिद्धान्तमार्तण्डकाराणामन्येषां च कल्पना छिन्नमूलैव । एतेन—"जगन्मिथ्यात्ववादी योगाचारः" इति विमर्शोक्तम्—परास्तम् । मिथ्यात्वं ह्यद्वैताभिमतं न निःस्वरूपत्वम्, किन्तु पारमार्थिकत्वेनाभावः । अत एवाकाशादीनां सृष्टिराम्नायमानोपपद्यते । योगाचारमते त्वर्था निःस्वरूपा इति कथं तत्साम्यमद्वैतमतस्य ?

स्वरूपेण निषेध इत्यद्वैतपक्षात् योगाचारस्य विशेषः ।

एकसत्तावादः, स्वरूपेण त्रैकालिकनिषेधइत्यद्वैतिनां यद्यपि कल्पितमेव स्वरूपं प्रपञ्चानां गोचरयतीति सांवृतसत्यत्ववादियोगाचारमतेन साकं प्रपञ्चमिथ्यात्वे साम्यमस्ति ; तथापि नेदं निःस्वरूपत्वं केवलानुमानगम्यम्, किन्तु श्रुतिमूलानुमानगम्यमिति श्रुत्यप्रामाण्येन केवलानुमानेन सांवृतसत्यत्वमर्थानां न साधयितुमलमित्येव "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रतात्पर्यम् । नह्यद्वैतिनो योगाचारा इव केवलानुमानसाध्यं प्रपञ्चमिथ्यात्वं मन्यन्ते । द्वितीयाध्यायद्वितीयपादगतत्वाच्चैषां सूत्राणां श्रुत्यमूलानुमाननिरसनपरत्वमेव गम्यत इति 'स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमि"त्यद्वैतिनां पक्षो नानेनाधिकरणेन निरस्यते । अत एव "क्षणिकत्वाच्च" इति ज्ञानक्षणिकत्वमप्यप्रामाण्यहेतुतयाऽत्र निर्दिश्यते । नह्यद्वैतिनो ज्ञानक्षणिकतावादिन इति न तिरोहितमिदं तत्त्वम् । —स्वाप्निकानामुत्पत्तिवर्णनम्, तदनन्तरमेव "न तत्र रथा रथयोगा"इति निषेधवचनं चैव खलु मायिकत्वसाधकतया 'मायामात्रमि'ति सूत्रेण प्रतिपाद्यते । न च योगाचारमते एकस्मात् चैतन्यादाविर्भावः सर्वेषां तत्रैव बाधश्चोरीक्रियते । तथाच निरधिष्ठानारोपवादनिरासार्थमेव "क्षणिकत्वाच्चे"ति सूत्रमिति वक्तव्यम् । यथाच ज्ञानक्षणिकतावादपरित्यागे स्वरूपचैतन्यस्यैव सत्यस्याधिष्ठानतास्वीकारे च योगाचारमतस्याद्वैतमतादविशेषः तथा बृहदारण्यकभाष्यादौ व्यक्तम् । तादृशस्तु योगाचारो नात्र निरस्य इति "क्षणिकत्वाच्चे"त्यादिनैवावगम्यते । सर्वथा तु नाद्वैतमतनिरसनं सूत्रकाराभिमतम्, प्रत्युत तत्समर्थनमेव ।

दृश्यत्वस्य मिथ्यात्व एव हेतुत्वं ननु सत्यत्वे ।

अयं भावः—लोकसिद्धं स्वाप्निकानामभावं गृहीत्वा योगाचारैर्जागरिकार्थानामप्यभावो मन्यते । इदं च, लोकानुभावो जागरिकाणां स्वाप्निकानां च

लक्षण एव वर्तत इत्युपपादनेन निरस्यत इति स्थितिः। शास्त्रसिद्धस्तु स्वाप्निकानामभावो न केवलमपलापरूपः, किन्तु स्वाधिकरणतया प्रतीयमाने स्वरूपोपलभ्यमानस्यैवाभावरूपः। इदमेव च मिथ्यात्वम्। अयं ह्यभावोऽर्थानां दृश्यत्वेन हेतुना,जडत्वेन हेतुनाऽन्येन वा साध्यते, "नाभाव उपलब्धेः"इति तु यो दृश्यत्वेनाभावनिषेधः साध्यते, स चापलापात्मकाभावनिषेध एव भवितुमर्हति। यस्य यस्य दृश्यत्वं तस्य तस्य नापलापो यथा ज्ञानस्येति हि वस्तुस्थितिः। यदि हि "नाभाव उपलब्धेरि"त्यादिकं प्रपञ्चसत्यत्वसाधकतयाऽत्र मन्यते, तर्हि दृश्यत्वं सत्यत्वव्याप्यमिति वक्तव्यम्। इदं च स्वाप्निकेऽर्थे व्यभिचरितम्। स्वाप्निकानामपि सत्यत्वविवक्षायां तु "वैधर्म्याच्च न स्वप्नादिवदि"त्यनन्तरसूत्रासङ्गतिः। अनेन हि सूत्रेण लोकदृष्ट्या स्वाप्निकानामपलापः कथञ्चन कर्तुं शक्यते, नतु जागरिकाणामित्येव बोध्यते। ततश्च लोकसिद्धानुभवमूलकार्थनिषेधायोगपराण्येवोक्तानि सूत्राणि। सति चैवं शास्त्रसिद्धमिथ्यात्वांशे तु न स्वाप्नजागरिकयोर्वैषम्यं सूत्रकारा मन्यन्ते।

सूत्रकारैः स्वाप्निकस्यैव मिथ्यात्वसाधने उपपत्तयः।

उत्पद्यमानस्य सतो मिथ्यात्वं हि सूत्रकाराभिमतं स्वाप्नजागरिकोभयसाधारणं स्वाप्निकमादायापि समर्थयितुं शक्यम्, जागरिकमादायापि, उभयमप्यादाय वा। मीमांसाया न्यायप्रधानत्वात् समानन्यायविषयान्यतरमिथ्यात्वव्यवस्थापनेनैवेष्टनिर्वाहात् स्वाप्निकमिथ्यात्वसाधने क्लेशाभावं मत्वा "मायामात्रमिति" सूत्रम्। "सन्ध्ये सृष्टिराह हो" ति सृज्यमानत्वेन पूर्वपक्षः, सृज्यमानत्वेऽपि मिथ्यात्वोपपादनेन सिद्धान्त इति वस्तुस्थितिः। सति चैवं न्यायसाम्यात् आकाशादीनामपि सृज्यमानानां मिथ्यात्वमविरुद्धमिति न्यायसिद्धमिदम्। मिथ्यात्वे हि स्वाप्निकानां स्वप्रतीत्यनन्तरकालिकबाध्यत्वमेव प्रयोजकम्। तच्च जागरिकाणामपि वाचारम्भणश्रुत्या बाध्यतया श्रुतानामविशिष्टमेव। अतः स्वाप्निकमायामात्रत्वोक्तेरत्रापि तात्पर्येऽपि न क्षतिः।

स्वाप्निकमिथ्यात्वस्यैव जागरिकमिथ्यात्वेऽप्यतात्पर्येऽपि न दोषः।

परंतु—"मायामात्रं तु" इति स्वाप्निकमायामात्रत्वं पनिरूपितम्,

तत एव जागरिकप्रपञ्चमिथ्यात्वासिद्धिः, "वैधर्म्याच न स्वप्नादिवत्" इति हि विलक्षणस्वभावत्वमुभयोः प्रतिपाद्यते। प्रातिभासिकं हि स्वाप्निकम्, व्यावहारिकाश्च जागरिकाः। अत एव—अनभिव्यक्तस्वरूपत्वहेतुसमन्वयः। न हि स्वाप्निकेष्विव जागरिकेष्वपि तत्तदुत्पादकावयवादिपूर्णसामग्र्यभावो वर्तत इति जागरिकमिथ्यात्वं सूत्रकारैरेव पृथक् सूत्रणीयम्। तच्च सूत्रितमेव सूत्रकारैः "तदनन्यत्वमारम्भणशब्दादिभ्य" इति। भगवत्पादा अपि—"न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति। प्रतिपादितं हि—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति समस्तस्य प्रपञ्चस्य मायामात्रत्वम्" इति वदन्तोऽत्रानुकूला इति वदन्ति। एतेन—स्वाप्नप्रपञ्चानां मायिकत्वं सूत्रयन् सूत्रकारो जाग्रत्प्रपञ्चानां कथं न मायिकत्वं सूत्रयतीति शङ्कापि—परास्ता। मायापदं हि पद्मपुराणादिषु—मायावादमित्यादावविद्यायामेव बादरायणाचार्यैः प्रयुक्तमिति सर्वसम्मतमिदम्। 'मायावादिन" इति परैस्सर्वैरप्यद्वैतिन एव व्यपदिश्यन्त इत्यपि न विप्रतिपन्नम्। "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिवाक्येऽपि विनोत्पादकसामाग्रीमुत्पन्नानिर्वचनीयस्वरूपेवेत्येव विवक्षितमिति मायामात्रपदस्येश्वरसृष्टमित्यर्थवर्णनं श्रीभाष्यकाराणां कथं सूत्रारूढम्?

अंशो नानाव्यपदेशादित्यादि सूत्राणामद्वैत एव स्वारस्यम्।

"अंशो नानाव्यपदेशात्" इत्यादिसूत्राण्यपि वस्तुगत्या जीवब्रह्माभेदबोधनपराण्येव, नतु शरीरशरीरिभावप्रतिपादनपराणि। अत्र हि सूत्रे—नानाव्यपदेशेनांशत्वमभेदव्यपदेशेन चानंशत्वमपि विवक्ष्यत इति 'अंश इवांशः; नानाव्यपदेशात्, अन्यथापि व्यपदेशात् इति विवरणेन भाष्यकारा मन्यन्ते। एवं विशृण्वन्तोऽपि भगवत्पादाः—"अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत्" इति सूत्रावतरणकाले—"अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति" "स्वभावप्राप्तस्तु भेदोऽनूद्यते" इति वर्णनेन भेदाभेदयोरुभयोरत्र विवक्षणम्, तत्रापि श्रुतितात्पर्यविषयत्वेनाभेद एव मुख्यः, भेदस्तु काल्पनिक इति व्यवस्थापनं च मन्वाना उक्तस्य सूत्रस्य "अंश इवांश" इति विवरणे लक्षणादोषपरिहारार्थं हृदयतः—अंशः, नानाव्यपदेशात्, अन्यथापि अनंशोऽपि— यस्माद्दाश-

कितवादित्वमधीयत एके इति विवरणमप्यनुमोदन्त एव । वेदान्तपरिभाषाभूमिकायां द्वितीयं विवरणमस्माभिः परैर्लक्षणादोषेण भगवत्पादविवरणे आपातप्रतिपन्नेऽनास्था प्रदर्श्यतेति शङ्कयैव प्रदर्शितम् ।

परिभाषाभूमिकोपक्षिप्तविवरणस्य भाष्यारूढत्वम्, अद्वैतसम्मतत्वं च ।

विमर्शकारास्तु—द्वितीये विवरणे भाष्यानारूढत्वम्, प्रथमे विवरणे लक्षणादोष इति दूषयन्तोऽपि हृदयतो द्वितीयविवरणे तत्र तत्र समीचीनभावमपि प्रदर्शयन्ति । एतावदेवास्माभिरत्रोपपाद्यते—यत् यदस्मदीयमपि विवरणं पूर्वोद्धृतभाष्यादिदृष्ट्या भगवत्पादभाष्यारूढमिति व्यर्थमेव तत्र तत्राक्रोशनम्—"भूमिकाकारैः शंकरभगवत्पादभाष्यविरुद्धमेव तन्मतमनूदितमिति । भूमिकायां हि—"अंशत्वमनंशत्वमुभयं सूत्रितम् । अंशत्वे नानाव्यपदेशो हेतुः, अनंशत्वे त्वभेदश्रुतय इत्यद्वैतसम्मतं विवरणमित्येवोक्तम्, नतु भगवत्पादीयं विवरणमिति । नचेदमद्वैतसम्मतमन्ततो गत्वा भगवत्पादानामपि न सम्मतम् ।

भगवत्पादीयांशपदार्थविवरणस्यैव सूत्रकाराशयानुरोधित्वम् ।

वस्तुतस्तु—जीवोत्पत्त्याद्यौपाधिकत्वस्य तदणुत्व-कर्तृत्वाद्यौपाधिकत्वस्य च प्रतिपादनानन्तरमंशत्वमप्यौपाधिकमेवात्र बोध्यते । तथाच्चांशः उपाधितः, नानाव्यपदेशात्, नतु स्वतः; अन्यथाव्यपदेशादिति विवरणमेवात्र भाष्यकारा अंश इवांश इति विवरणेन मन्यन्ते । इदमेवास्मन्मतम्—यत् अंशत्वमात्रबोधनं जीवानां न बादरायणसम्मतम् , यतो लोकसिद्धं साङ्ख्ययोगविचारसिद्धं च जीवनानात्वं महाभारते स्पष्टमेव बादरायणाचार्यैः खण्डितम् ।

'अंशो नानाव्यपदेशादि"त्यत्र श्रीभाष्याभिमतविवरणस्य सूत्रानारूढत्वम् ।

अंशत्वमिह साधनीयं शरीरत्वरूपमिति श्रीभाष्यसम्मतमेव यदि सूत्रकाराभिप्रेतम्,तर्हि—अंशो दाशकितवादित्वमधीयते एके इत्येवालम्, नत्वत्र नानाव्यपदेशस्य हेतोरुपादानमपेक्षितम् । नानाव्यपदेशपरेन हि विरुद्धस्वभावत्वेन जीवेश्वराम्नानं विवक्ष्यते । यत्र च वाक्ये नानाव्यपदेशस्तत्र तयोः सामानाधिकरण्यं तु नास्तीति न तत्र शरीरशरीरिभावविवक्षा, यत्र शरीरशरीरिभावविव-

क्षा, तेषु वाक्येषु तु न नानाव्यपदेश इति हेतुद्वयस्य समुचितस्य प्रत्येकमेकैकस्य च कथमंशत्वसाधकत्वमिति, नानाव्यपदेशोनांशत्वम् तद्भेदश्चान्यथा व्यपदेशेन, अभेदश्रुत्या चेति वक्तव्यमिति, कथमंशत्वमात्रसाधनपरं श्रीभाष्यं सूत्रारूढम् ? एतेन—तत्र तत्र भेदव्यपदेशान्यथानुपपत्या द्वैततात्पर्यकत्वं सूत्रकाराणामिति घण्टानादोऽपि श्रीवैष्णवानाम्—शान्तो भविष्यति। यतः—सूत्रकारा एव अंशत्वाभिप्रायेणैव भेदव्यपदेशः, स च काल्पनिकः, पारमार्थिकस्त्वभेद इति व्यवस्थापयन्ति। न केवलं नानाव्यपदेशादित्याद्यनुपपत्तिः श्रीभाष्ये, किन्तु 'अन्यथा चापी'' ति चशब्दवैयर्थ्यमपि। अस्मन्मतेतु—अंशः, अंशोऽपि, नानाव्यपदेशात्, अभेदश्रुतेश्चेति विवरणात्तत्सार्थकमेव। एतेन—चशब्दवैयर्थ्यमद्वैतमत इति शङ्कापि—परास्ता। अस्यैव विवरणस्य सूत्रकाराभिमतत्वे हि व्यवहारदृष्ट्या जीवेश्वरभेदः, परमार्थदृष्ट्या तु तदभेद इति न केवलं जीवेश्वरैक्यम्, किन्तु जीवानामप्यैक्यं महाभारतसिद्धमनूदितं भवति।

सति चैवं श्रुतिषु तत्रतत्र श्रूयमाणो भेद औपाधिक एव ; तदंशोऽनुवादमात्रं श्रुतेरित्येव बादरायणाशयः। अंशत्वे व्यपदेशसिद्धत्वमभेदे श्रुतिसिद्धत्वं च वदन्तः सूत्रकारा भेदाभेदयोर्भेद एव परमं तात्पर्यं मन्यन्ते। अधीयमानत्वेन श्रौतत्वमभेदस्यावगम्यते। "उभयेऽपि हि भेदेनैनमधीयत एक'' इति वाक्ये सत्यं भेदस्याप्यधीयमानत्वं शारीरत्वादिना भेद एव युक्त इति गमयति। न हि वयमधीयमानत्वेन निर्दिश्यमानत्वमात्रेणानंशत्वस्यैव श्रौतत्वं वदामः,किन्तु विरुद्धयोरेकस्य व्यपदेशसिद्धत्वोपपादनपूर्वकमपरस्याधीयमानत्वनिर्देशेन। 'शारीरश्चे'' ति सूत्रे तु नाभेदस्य व्यपदेशसिद्धत्वपूर्वकं भेदस्याधीयमानत्वं निर्दिश्यत इति न दोषलेशोऽपि। सर्वथा तु शरीरशरीरिणोस्तत्त्वेन भानमपृथक्सिद्ध्याख्याभेदप्रतीतिमादायैव व्यवस्थाप्यते भवद्भिरिति श्रुति-सूत्र-दर्शनान्तरासिद्धापूर्वपदार्थकल्पनादीनि बहूनि दूषणानि श्रीभाष्यकाराणां सूत्रार्थविवरणे। अधिकमवसरान्तरे निरूपयिष्यामः।

औपाधिकनानात्वादीनां सूत्रभाष्यादिसम्मतत्वम्।

जीवस्योत्पत्तिरौपाधिकी, स्वरूपतस्तु तन्नित्यत्वमिति 'चराचरव्यपाश्र-

यत्तु "नात्मा श्रुतेरि" ति सूत्रद्वयेन तद्भाष्येण च सिद्धम्। यथाचानयोः सूत्रयोरन्यथायोजनं श्रीभाष्यकाराणां नोपपन्नम्, तथा परिभाषाभूमिकायां व्यक्तम्। अत्र च विमर्शकारा अन्ये च तूष्णीम्भावमेव प्रतिपद्यन्त इति नात्र किमपि समालोचनीयम्।

"ज्ञोऽत एवे" ति सूत्रे औपाधिकं ज्ञानाश्रयत्वं स्वरूपतो ज्ञानरूपत्वमिति भाष्यकारीयांशव्यवस्था।

"ज्ञोऽत एवे" ति सूत्रे तु ज्ञः इति पदेन ज्ञानाश्रयत्वं ज्ञानरूपत्वं च बोध्यत इति श्रीभाष्यकारा मन्यन्ते। भगवत्पादास्तु — नित्यचैतन्यस्वरूपोऽयमात्मा इति ज्ञानस्वरूप इत्यमुमेवार्थं स्पष्टं वदन्ति। "नित्यचैतन्यरूपत्वे घ्राणाद्यानर्थक्यमिति चेत्, न ; गन्धादिविषयविशेषपरिच्छेदार्थत्वात्" इति तत्सूत्रगतभाष्येण तु घ्राणादीनां विषयविशेषावच्छिन्नचैतन्याभिव्यञ्जकवृत्तिजनन एवोपयोगात् अध्यारोपेण वृत्त्याश्रयत्वेनैव ज्ञातृत्वव्यवहार इति भगवत्पादाः सूचयन्ति। सति चैवं यदि 'ज्ञः' इति पदस्य ज्ञानाश्रय इत्यर्थो मन्यते, तावताऽपि न हानिः, ज्ञानाश्रयत्वं तु गन्धादिचराचरव्यपाश्रयत्वप्रयुक्तमेव गन्धादिविषयपरिच्छेदार्थवृत्त्याश्रयत्वप्रयुक्तमेव वेति योजनापि न दोषायेति भाष्याशयः। स्पष्टं च सूत्रकाराः—"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" "इति सूत्रे "प्राज्ञवत्" इति निदर्शनव्याजेनामुमर्थं सूत्रयन्ति। तथाच श्रीभाष्यमत इवात्रापि ज्ञानरूपत्वं ज्ञानाश्रयत्वमुभयं च मन्यत एव। "ज्ञ" शब्दस्य ज्ञानरूप इत्यर्थस्तु श्रीभाष्यकाराणामप्यभिमत इति तु तन्निर्देशस्वारस्यमुभयाविशिष्टमेकरूपमेव। स्यात् विशेषः—यत् नित्यधर्मभूतज्ञानाश्रयत्वमिति स्वसंप्रदायमात्रसिद्धधर्मभूतज्ञानेन ज्ञानाश्रयत्वं श्रीभाष्यमते, अद्वैतमते साङ्ख्य-योगदर्शनसिद्धां "कामः सङ्कल्पः" इति श्रुत्यनुमोदितां च वृत्तिमाश्रित्य "साङ्ख्यं च योगं च सनातने द्वे वेदाश्च सर्वे निखिलेन राजन्" इति साङ्ख्य-योगाभ्यामेव विशिष्टैकवाक्यता चोपक्षिप्ता, तदनुसारेण ज्ञानाश्रयत्वमिति। सर्वथा तु ज्ञानाश्रयत्वमौपाधिकमिति सूत्रतद्भाष्यादिसम्मतमिति नेयं विमर्शकारोक्त्या निरङ्कुशा कल्पना, येन—"निरङ्कुशं भवतां व्याख्यानस्वातन्त्र्यम्" इत्युपालम्भनं साव-

सरं स्यात्। सति चैवम्—श्रीभाष्यकाराणां तदनुयायिनां च ज्ञानाश्रयत्वादि-
प्रक्रिया किं निरङ्कुशोतास्मदादीनामिति सर्व एव समालोचयन्तु।

नित्य-धर्मभूतज्ञानकल्पनस्य सूत्राशयविरुद्धत्वम्।

संकोचविकासशालि-नित्य-धर्मभूत-ज्ञानप्रक्रियादि . श्रीभाष्यकाराणाम् "एवं चात्माऽकात्स्न्र्यमि" ति सूत्रेणैव न्यायसाम्येन प्रतिक्षिप्ता। तत्र हि आत्मनः संकोचविकासशालित्वेऽनित्यत्वमापद्येतेति भाष्यद्वयसंप्रतिपन्नोऽयमर्थः। इदमेत्रा-लोच्यताम्—कथं संकोचविकासशालित्वे धर्मभूतज्ञानस्यापि कथं नानित्यत्व-मिति। यथाच श्रीभाष्यमते सर्वज्ञानयाथार्थ्यादिप्रक्रिया निरङ्कुशा बह्व एव, तथा परिभाषाभूमिकादिषु स्पष्टमेव।

अविद्यामायादिपदानां नाप्रसिद्धत्वम्।

अविद्यापदम "विद्यायामन्तरे वर्तमानाः" इति श्रुतिसिद्धम्, मायापदं 'मायामेतां तरन्ति ते"इति श्रुतिसिद्धम्, "मायावादम्" "मायामात्र"मित्यादि-बादरायणवचनसिद्धं च। अनिर्वचनीयपदं तु यौगिकमनृतपदपर्यायम्। "अनृ-तपदम्" सत्यं चानृतं चेति मिथ्यापर्यायं श्रुतिसिद्धम्। अध्यारोपाध्यासा-दिपदार्थास्तु योगाचारादिदर्शनान्तरप्रसिद्धाः,व्यावहारिक-पारमार्थिक-विभागो यो-गार्थमादाय प्रवृत्तः।

"अन्तःकरणाद्युपाधित्ववादस्य सौत्रत्वम्"

अन्तःकरणाद्युपाधितावादास्तु कादाचित्कबुद्धिसंयोगादिकं सूत्रसिद्धमा-दाय प्रवृत्ताः, न सूत्रार्थासङ्गताः। "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति विज्ञानगुणसारत्ववर्णनानन्तरं "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनादि" ति सूत्रं विज्ञानसम्बन्धस्य कादाचित्कत्वोपपादनार्थमित्येव युक्तम्। अन्यथा तद्गुणसार-त्ववर्णनेनैव यावदात्मभावित्वस्य सिद्धत्वात् उक्तसूत्रं वितथमेव स्यात्। अत्र यावदात्मभावित्वेन दोषाभाववर्णनात् तद्गुणसारत्वस्य किञ्चिदधिककालत्वशङ्कैव वार्यते। ततश्चात्मपदमत्र संसारिपरमिति संसारकालपर्यन्तमेव बुद्धिसंयोगः, नतु ~ न्तरमिति स्पष्टं सूत्रयन्ति सूत्रकाराः। तथाचान्तःकरणादीनां "भि-

यते हृदयग्रन्थिरित्यादिवचनसिद्धवियोगकालोऽपि सूत्रेणानेन सूच्यते। तेषा-मुपधित्वेन व्यपदेशे कारणमिदमेव—यत् दर्पणादौ कादाचित्के स्वसङ्गिनि धर्मान्तरप्रतीतिनिमित्त एवोपाधिपदं प्रयुक्तमिति सर्वविदितमिदम्।

तत्र तत्र श्रुतिषु शरीरपदप्रयोगस्याप्युपाधितायां तात्पर्यम्।

अत एव "पादोऽस्य सर्वा भूतानी"ति सर्वेषां पादत्वप्रतिपादनमुपपद्यते। श्रीभाष्यमते तु सर्वेषां ब्रह्मशरीरत्वात्पादत्ववर्णनं कथमुपपद्यते। अन्तर्यामि-ब्राह्मणादिकं उपासनाविशेषमात्रपरं पूर्वोत्तरसन्दर्भसमालोचने न श्रीभाष्यमतानु-गुणमिति परिभाषाद्वितीयसंस्करणभूमिकायामन्त एव विवेचितमिति, शरीरशरी-रिभावोऽयं न श्रौतः। सति चैवं शरीरपदप्रयोगोऽपि तत्र तत्रोपाधिताभिप्राये-णैव प्रयुज्यते; अन्यथा "त्रिपादस्यामृतं दिवी"तिपादत्रयस्य सच्चिदानन्दा-त्मकस्य ब्रह्मणः कथं "दिवी"ति भूतासम्यन्धेन व्यवस्थोपपद्यते। न हि शरीर-शरीरिणोः शरीरं पादत्रयम्, शरीरी एकः पाद इति कुत्रापि वर्णितम्।

अंशपदप्रयोगस्य न शरीराभिप्रायत्वं किन्त्वौ-
पाधिकत्वाभिप्रायत्वम्।

एतेन—"ममैवांशो जीवलोकः" इत्यादिवाक्यान्यपि—व्याख्यातानि। अत्र अंशत्वं स्वरूपत्वमेवाभिसंहितम्; स्वरूपैक्यात्; अन्यथा श्रीभाष्य-मतस्यैव सूत्रारूढत्वे, प्रकृत्यादीनां स्थूलचितां च सर्वेषामंशत्वं शरीरत्वापर-पर्यायं कथं न सूत्रितमिति शङ्का कथं परिहरणीया? ततश्चांशाधिकरणं न जीव-परमात्मनोः शरीरशरीरिभावनिरूपणपरम्। अत एव—"प्रकाशादिवच्चैवं पर" इति प्रकाशदृष्टान्तादिकमुपपद्यत इत्यादि भूमिकायां व्यक्तम्। नहि प्रभा-प्रभावतोः शरीरशरीरिभावः श्रीभाष्यमतेऽपि।

भोक्त्रापत्तिसूत्रेऽविभागश्रुतिः पञ्चाशयपत्तिः।

एतेन—"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इति सूत्रस्याशयमपि व्याख्यातम्। अत्र हि भाष्ये श्रीभाष्यकारैः शरीरशरीरिभावेन भोक्तृत्वापत्ति-रेवाशङ्क्य निरस्यत इति स्पष्टं तत्रैव श्रुतप्रकाशिकायाम्। तदुक्तम्—"ननु

दृष्टान्तभावात्'' इत्यत्र शरीरगतबालत्वयुवत्वादिधर्माणां शरीरिण्यप्रसङ्गं दृष्टान्तीकृत्य परात्मनि दोषामसक्तिरुक्ता। अत्र शरीरसंसर्गप्रयुक्तभोक्तृत्वप्रसङ्गः परिह्रियते'' इति। अनेन विशदमिदं ज्ञायते—यदनेनैव भोक्तृत्वमपीश्वरस्यापाद्यत इति। भोक्त्रापत्तिशब्देन च श्रीभाष्यकारा भोक्तृत्वापत्तिं मन्यन्ते, निमित्तं च तत्र शरीरशरीरिभावो न सूत्रोपात्तः नवाऽनन्तरशिष्टापरिग्रहाद्यधिकरणप्रस्तुत इति तदध्याहारदोषः समापतति। तत्परिहारार्थं तु सूत्रगतमविभागपदमेव शरीरशरीरिभावोपस्थापकमिति वक्तव्यमिति, तत्र भोक्त्रापत्तिरिति प्रथमा स्यादिति परिभाषा भूमिकातात्पर्यम्। यत्तु भोक्तृत्वापत्तिप्रयुक्ताविभागापत्तिरूपमर्थान्तरमुक्ताधिकरणप्रतिपाद्यम्, तत्तु पूर्वपक्षप्रयोजनमेवेति न तदर्थमधिकरणान्तरापेक्षा। "स्याल्लोकवत्'' इति सिद्धान्तांशेन हि भोक्तृत्वापत्तिनिरास एव क्रियते श्रीभाष्यइत्यतोऽपीदमेवावगम्यते—यत् विभागव्यवस्था प्रयोजनमिति, तत्साम्यात् अविभागापत्तिरपि प्रयोजनमेवेति युक्तम्।

अद्वैतमत एव भोक्त्रापत्तिसूत्रे न
सूत्रावृत्त्यादि दूषणम्।

एतावदेवात्र विवक्षितम्—यत्—"संभोगप्राप्तिरिति चेन्न वैशेष्यात्'' इति भोक्तृत्वनिरासानन्तरं पुनरपि भोक्तृत्वापत्तिशङ्कादिकं श्रीभाष्यमते न संभवति; अद्वैतमते तु कार्यकारणयोरभेदात् भोग्यानां भोक्तृभावस्य साधनात् सिद्धेन भोक्तृभावेनाविभागापादनमिति न सूत्रावृत्त्यधिकरणानैकत्वादीनि दूषणादीनीति।

श्रीभाष्यमते लोकवदिति दृष्टान्तास्वारस्यम्।

लोकवदिति दृष्टान्तस्वारस्यमपि न श्रीभाष्यमत इति भूमिकायामेव विवेचितम्। सत्यं विमर्शकाराः "श्रीभाष्यमतमन्यथा गृहीतमि''ति "मिथ्या गृहीतमि''ति क्रियासमभिव्याहारेणोपालभन्ते, परन्तु नवयमुपालम्भमात्रमुत्तरं कुत्रापि दातुमिच्छामः। इदमेवात्रालोच्यताम्—"यत् कारागृहवासमात्रेण नियन्तुर्दुःखं न दृष्टमित्येव श्रीभाष्याशय'' इति विमर्शकाराणां विवरणं कियद्वधि योग्यमिति। श्रीभाष्यकारा हि स्वमतसमर्थनार्थं महता प्रयासेन "संभोग-

प्राप्तिरि''ति सूत्रे शरीरान्तर्वर्तित्वमात्रेण भोक्तृत्वशङ्कां परिहरन्ति, भोक्त्रापत्ति: सूत्रे तु जीववद् ब्रह्मणोऽपि शरीरित्वे तद्वदेव भोक्तृत्वप्रसङ्गो दुर्वार इति विवेचयन्ति। विमर्शकारास्तु शरीरान्तर्वर्तित्वमात्रेण भोक्तृत्वशङ्कावारणप्रकार-मेव विवक्षितमत्रेति श्रीभाष्याशयं निष्कृष्य विवेचयन्तः कुत्र वा श्रीभाष्य-कारान्नयन्तीति त एव विमृशन्तु। नहि सशरीरत्वकृतमनिष्टभोक्तृत्वम्, किन्तु कर्मवश्यत्वकृतमिति वेदान्तसारोक्तौ न वयमपि विवदामहे; इदमेवात्र वयं वदामः—यत्—लोकवदिति दृष्टान्तस्वारस्यं सशरीरत्वेन भोक्तृत्वशङ्कानि-रसने न भवतीति। एतेन—प्रजाराजयोः (?) शरीरशरीरिभावोऽस्तीति स्वप्नेऽपि नोक्तं श्रीभाष्यकारैरिति विमर्शोऽपि-व्याख्यातः ; यत एवं वदन्तोऽपि विमर्शकाराः शरीरित्वप्रयुक्तभोक्तृत्वशङ्कायामशरीर्यभोक्तृत्वनिदर्शनमसांप्रत-मित्येव समर्थयन्ति। तदिदं सिद्धम्—यत् जगद्ब्रह्मणोस्तादात्म्यमुपादानो-पादेयभावप्रयुक्तमेव, नतु शरीरशरीरिभावप्रयुक्तमपि। अत एव "सर्वं ख-ल्विदं ब्रह्म तज्जलानि''ति तज्जत्वादीनामेव तादात्म्यप्रयोजकत्वनिर्देश उप-पद्यते।

कारणवाक्यविषया ब्रह्मलक्षणादिप्रवृत्तिरपि सूत्रकाराणामत एवोपप-द्यते। "तदनन्यत्वमारम्भणशब्दादिभ्य'' इत्यपि सूत्रं स्पष्टमभेदः कार्यकारण-भावप्रयुक्त इत्येव बोधयतीति श्रीभाष्यकारा अपि मन्यन्ते। तच्च कारणत्वं स्वगतं साक्षाल्लक्षणमुतान्यगतमिति तु विचारः पूर्वमेव समालोचितः। इदमेवात्र वक्तव्यम्—यत्—अभेदः शरीरशरीरिभावप्रयुक्त इति न कुत्रापि सूत्रे वर्णि-तम्। तदनन्यत्वाधिकरणे तु कार्यकारणभावप्रयुक्त एवाभेद इति व्यवस्थापित-मेव। तस्य चासति बाधके साक्षात्कार्यकारणभावविवक्षायामेव स्वारस्यम्। शरीरशरीरिभावस्तु जीवब्रह्मणोः प्रपञ्चब्रह्मणोर्वा नेदानीमपि सिद्ध इति, न शरीरपरिणामाभिप्रायं ब्रह्मकारणत्वमिति व्यवस्था सम्भवदुक्तिकेत्येव तदन-न्यत्वाधिकरणादिसारः।

इतरव्यपदेशाधिकरणसार्थक्यमद्वैतमत एव।

अत एव "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः'' इति पूर्वपक्षः,

"अधिकं तु भेदनिर्देशात् इति सिद्धान्तश्च सङ्गच्छते। अत्रेतरव्यपदेशात् इति इतरव्यपदेशस्य सिद्धवत्कारेणेश्वरस्य हिताकरणाद्यापाद्यते। इतरव्यपदेशश्च जीवाभेदव्यपदेश एव मतद्वयसम्प्रतिपन्नः। स च यदि शरीरशरीरिभावप्रयुक्तः, तर्हि शरीरशरीरिणोरत्यन्ताभेदाभावात् तदभेदव्यपदेशेनेश्वरकारणत्वं न बाधितमिति न पूर्वपक्षोत्थितिरिति, अद्वैतसम्मताभेदव्यपदेशेनैव पूर्वपक्ष इति सर्वसंप्रतिपन्नमिदम्। इदं च तदनन्यत्वाधिकरणादौ शरीरशरीरिभावादिव्यवस्थापनानन्तरं कथं सङ्गतम्? तदनन्यत्वं हि तत्र कार्यकारणयोरेकद्रव्यत्वरूपमेव खलु साधितम्, ततएव च सर्वात्मत्वम्। अतः साधितेऽप्यनन्यत्वे कार्याणां जीवादीनां वा स्वरूपसतां विशिष्टेन रूपेण नाभेदः, किन्तु तदधिष्ठानभावेनैवेति सूचनार्थमेव—"अधिकं तु भेदनिर्देशादि"ति सिद्धान्तेनेतरव्यपदेशाधिकरणप्रवृत्तिरिति वक्तव्यम्।

सति चैवं कारणाभिन्नानामपि कार्याणां कार्येण रूपेण नानात्वमपि विद्यत इत्येवात्र विवक्षितम्—"कार्यात्मना तु नानात्वमभेदः कारणात्मना" इति। कार्यात्मना तु नानात्वं कार्याणां कल्पितत्वस्य पूर्वाधिकरणे व्यवस्थापनात् काल्पनिकमित्यवचनसिद्धमिदम्। 'अधिकं तु' इति ब्रह्मणोऽधिकत्वमतिरिक्तत्वमेव भेदनिर्देशेन बोध्यते; कार्यात्मना भेदव्यपदेशात्, न तु "शरीरि तु" इति शरीरित्वम्,येन शरीरशरीरिभावाभिप्रायाऽभेदश्रुतिरिति कल्पनार्थमिदमधिकरणमिति समापद्येत। किञ्च जीवस्य ब्रह्मशरीरत्वं नानाव्यपदेशान्यथाव्यपदेशाभ्यामुभाभ्यां "अंशो नानाव्यपदेशात्" इत्यधिकरणे वर्णयिष्यते। सति चैवं कथमत्र परं केवलभेदश्रवणेन शरीरित्वं ब्रह्मणः साध्यत इति प्रश्नोऽप्यसमाधेय एव। सर्वथा तु भेदोऽपि केनचन रूपेणौपाधिको वा कल्पितो वा स्वीकर्तव्य इत्युपपादनार्थमेवेतरव्यपदेशाधिकरणमिति कथमिदं श्रीभाष्यानुयायिनां स्वरसमधिकरणम्?

जीवब्रह्मणोर्भेदाभेदव्यवस्था।

तदयं निष्कर्षः—सत्यं तत्त्वमसीति जीवब्रह्मणोरभेदो वर्ण्यते। अत्र न तत्त्वंपदवाच्यार्थयोरभेदो विवक्ष्यते, किन्तु लक्ष्ययोरेव। तत्र वाच्यार्थो जीवो-

ऽन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयान्यतमस्वरूपो जाग्रत्स्वप्न-सुषुप्त्यव-स्थात्रयवान् तत्पदवाच्यादीश्वरात् कारणाद् भिन्न एव,स्वरूपचैतन्यस्य स्थूलशरी-राद्युपाध्यपवादेन निष्कृष्टस्य लक्ष्यस्य तु लक्ष्येण तत्पदार्थेनाभेद इति व्यवस्थाप-नार्थं तदनन्यत्वाधिकरणमितरव्यपदेशाधिकरणं चोभयं जीवस्वरूपविषये योज-नीयम्। एवंच जीवब्रह्मणोः सामानाधिकरण्यं न स्वरूपबाधप्रयुक्तं बाधायां सामानाधिकरण्यम्, किन्तूपाधिबाधप्रयुक्तमेव। तथाच यावदुपाधिबाधं भेद-व्यपदेश एव युक्तः। तद्बाधानन्तरं तु स्वरूपैक्येऽपि तस्याकारणत्वान्न हि-ताकरणादिदोषप्रसङ्गः। अयमेवाशयः—"नतु तं वयं जगतः स्रष्टारं ब्रूमः; भेदनिर्देशात्। नन्वभेदनिर्देशोऽपि दर्शितः—"तत्त्वमसी"ति, नैष दोषः, आकाशघटाकाशन्यायेनोभयसंभवात्" इति भाष्येण गम्यते।

अद्वैतमते भेदाभेदयोरविरोधप्रकारः।

एतेन—यदि पूर्वेण तदनन्यत्वाधिकरणेनाभेदो निरणायि, तर्हि कथं तद्वि-रोधेन भेदसिद्धान्तनं सङ्गच्छेतेति शङ्कापि—परास्ता; उभयाविरोधस्यानुपदोद्भू-तभाष्यदृष्ट्या स्वीकरणीयत्वात्। तथाच—"अधिकं तु भेदनिर्देशात्" इत्यत्रा-धिकपदेन परस्य प्रत्यगात्मस्वरूपस्यैव विवक्षणेन तेनाभेदस्तत्त्वमसीत्यत्र वर्णितः, नतु अहंप्रतीतिगम्यशबलितजीवस्वरूपेण, यतस्तेन ब्रह्मणो भेद एव। इदमेवा-धिकपदम्—"अधिकोपदेशात्तु" इति सूत्रेऽपि बादरायणग्रहणेन प्रयुञ्जानाः सूत्रकारा विशिष्ट-शुद्ध-जीवस्वरूपाविभागेन जीवब्रह्माभेदश्रुतीनामन्यथा ग्रह-णेन तत्र तत्र पूर्वपक्ष इति सूत्रयन्ति। सर्वथातु न भेदव्यपदेशान्यथानुपपत्त्या सूत्रकारा अद्वैतवादविरोधिनः, किन्तु कल्पिताकल्पितभेदाभेदव्यवस्थापनेन तदनुकूला एव।

इतरव्यपदेशाधिकरणस्याद्वैतनिरासानात्पर्यम्।

यत्तु—अद्वैतमतनिरासार्थमिदमधिकरणमिति श्रीभाष्यकाराणां विवर-णम्, तत्र यदि यथार्थाद्वैतवादमाश्रित्यायं पूर्वपक्षः, तर्हि तु अनुक्तोपालम्भ-नम्। नहि अद्वैतिनो विशिष्टेन संसारिणा जीवेन ब्रह्मणोऽभेदं तत्त्वमसीति महावाक्यार्थं मन्यन्ते। "अधिकं तु भेदनिर्देशादि" ति सिद्धान्तसूत्रमपि ना-

द्वैतमतस्यापि न साधारणमिति कथं तस्याद्वैतमतनिरासार्थत्वम् ? नहि अद्वैतमतसाधारणेन सिद्धान्तेनाद्वैतमतस्य निरसनं भवति। "अश्मादिवच्च तदनुपपत्तिरि"ति सूत्रमप्यत एवोपपद्यते। अत्र तदनुपपत्तिपदेन "पूर्वपक्षापादितहिताकरणादिदोषानुपपत्तिरेव विवक्षितुं युक्ता, नतु ब्रह्मभावानुपपत्तिः। सत्यपि ब्रह्मभावे हिताकरणादिदोषानुपपत्तिरेवात्र वर्ण्यते। ब्रह्मभावानुपपत्तौ हि अश्मादिदृष्टान्तोऽनुपपन्नः। श्रीभाष्यकारा हि अश्मादीनामिव जीवस्यापि न ब्रह्मभाव इति व्याचक्षाणा अश्मादिसाम्यं जीवानां केन मतेन मन्यन्त इति समालोचनीयम्। अद्वैतमते तु जीवानामपि चेतनत्वात् नाश्मादिसाम्यम्, स्वमते तु कथञ्चन शरीरत्वाविशेषात्साम्यं भवितुमर्हति, परन्तु नेदं परमतनिरासार्थं पर्याप्तं लिङ्गम्। तथाच सत्यपि चेतनत्वेन साम्ये विशेषोऽपि कश्चनोपाध्यादिकृतो वर्तत इति, भेदोऽपि ब्रह्माभिन्नानां जीवानां संभवतीत्येवोक्तसूत्रार्थः। अनेन ह्यधिकरणेनाभेद इव भेदोऽपि जीवेश्वरयोर्बोध्यते, तत्र चाभेदश्चैतन्यात्मना, भेदस्तु कल्पितेन रूपेणेति निष्कर्षः। सर्वथातु नाद्वैतमतानुवादेन तन्निरासार्थमुक्तमधिकरणम्।

कृत्स्नप्रसक्त्यधिकरणस्य श्रीभाष्यमतेऽस्वारस्यम्,

अद्वैतमत उपपत्तिश्च।

तदनन्यत्वाधिकरणसिद्धे ब्रह्मभावे,जीवानां हिताकरणादिदोषप्रसङ्गमापाद्य परिहृत्य च, भोक्त्रापत्तिसूत्रसूचितपरिणामपक्षेऽपि न तादृशी काचनानुपपत्तिः, यावत्सर्वमुक्ति ईश्वरभावस्यैव मुक्तित्वादिति विवेचनार्थम्—"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वे"त्यादिशङ्कासमाधानादिः। अत्र कृत्स्नप्रसक्तिः,निरवयवत्वशब्दकोपश्च ब्रह्मणः कारणस्य श्रीभाष्यमतेऽसंलग्नमेवोभयमपि। नहि तन्मते ब्रह्म केवलं परिणामिकारणम्; प्रकृतिरेव खलु कारणम्,नवा निरवयवम्; विशिष्टत्वात्। निरस्तचिदचिद्विभागतया निरवयवत्वं श्रीभाष्याभिमतं तु गौणमपि कथं विरुद्धम् ? एतादृशं हि निरवयवत्वं ब्रह्मण उपादानकारणताव्यवहारोपपादकमिति खलु श्रीभाष्यादिमतम्। सति चैवं कथं ब्रह्मोपादानतायां निरवयवत्वमिदं विरुद्धं भवति ? कृत्स्नप्रसक्तिस्तु कस्यापाद्यते—किं विशिष्टस्यौत विशेषण-

स्य,आहो विशेष्यस्य ? यस्य निरवयवत्वं मन्यते। यदि विशिष्टस्य,तर्हि विशेषण-भूतप्रकृतिकृत्स्नप्रसक्त्यधीनैव तस्य सा वक्तव्येति, प्रकृतेः सावयवायाः कृत्स्नरूपेण परिणामस्य मृदादिवदनावश्यकत्वात्कथमिदं दूषणम् ? एतेन—विशेषणस्येति पक्षोऽपि निरस्तः । विशेष्यस्य केवलस्य तु कारणत्वमेव न भवदभिमत-मिति कथं कृत्स्नप्रसक्त्यापत्तिः ? अद्वैतमते तु केवलं ब्रह्मैव परिणामिकारण-मिति, तस्य निरवयवत्वादिविरोधात् कृत्स्नप्रसक्त्यापादनं न कथमप्यनुपपन्नम् । एतेन--निरवयवप्रायत्वात्त्विदं चिदचिदविभागमाश्रित्येति विमर्शोक्तमपि — परास्तम् । नह्येतादृशं निरवयवत्वं मुख्यमिति, सूत्रगते निरवयवत्वशब्दे लक्षणा-पत्तिरेको दोषः । गौणमेव निरवयवत्वं सूत्रकाराभिमतमित्यत्र का वा विनिगमना भवद्भिरुपक्षिप्यते ? नहि गौणनिरवयवत्वशब्दविरोधो दूषणं भवितुमर्हति । मुख्यार्थविरोधे खलु विरोधः । गौणं च तत् ब्रह्मकारणतोपपादकं कथं विरुद्धमित्य-परं दूषणमित्यादि पूर्वोक्तं सर्वमप्यत्रानुसन्धेयम् ।

श्रुतेस्तु शब्दमूलत्वादिति सूत्रोपपत्तिः ।

अनेन हि सूत्रेण श्रुतौ यत् यथोक्तं तत् तथैव स्वीकर्तव्यमिति,लौकिकन्याय-विरोधो नात्र पर्यालोचनीय इति बोध्यते । अनेन च, न विकारो ब्रह्मण उरूक्रियते परिणामत्वेऽपीत्येवार्थः श्रीभास्कराद्यभिमतो बोध्यते । श्रीभाष्यमतेऽपि ब्रह्मनि-रवयवत्वेऽपि पूर्वोक्तरीत्या कृत्स्नप्रसक्त्याद्यभावात्, कारणत्वोपपादनसंभवाच्च व्यर्थमेवेदं सूत्रमापद्येत । "आत्मनि चैवं विचित्राश्च" इति सूत्रं वस्त्व-न्तरसम्बन्धिनि आरोपेण वस्त्वन्तरधर्मे दूषणपरतया श्रीभाष्यकारा व्याच-क्षते । नहीदमत्र कथमपि सङ्गतम् । नहि साङ्ख्योऽस्मिन्नधिकरणे कृत्स्नप्रसक्तिमा-पादयन् अन्यधर्मस्यारोपेणान्यत्रापत्तिमापादयति । कारणत्वेऽपितु न कृत्स्नप्रस-क्तिरिति खलु वक्तव्यमिति—स्वप्नादौ जीवस्य रथादिस्रष्टुरपि न कृत्स्नप्रसक्तिर्दृ-ष्टेति भगवत्पादविवरणमेव सांप्रतम् । "श्रुतेस्तु शब्दमूलत्वात्" परिणामवादो ब्रह्मणः तदभाववादमात्रे व्यपदिश्यते । सच विवर्तवाद एव वस्तुगत्येति विवरण-मपि तु नात्र दोषाय भवति । सर्वथा तु कृत्स्नप्रसक्त्यधिकरणं न श्रीभाष्यकारा-णामनुकूलम् । कार्यकोटौ विशेष्यस्य ब्रह्मणोऽपि . कार्यत्वेनानित्यत्वापादनं

तु कथं न श्रीभाष्यमते ? ततश्चा "संभवस्तु सतोऽनुपपत्तेरि"ति सूत्रमसङ्गतमेव तन्मते स्यात्। अस्मिन् ह्यधिकरणे श्रीभाष्यकारा "ब्रह्मण एवोत्पत्त्यभावः, तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्त-महदहंकार-तन्मात्रेन्द्रिय-वियत्पवनादिप्रपञ्चस्य कार्यत्वमेवे"ति वर्णनेनाव्यक्तपदवाच्यायाः प्रकृतेरप्युत्पत्तिं प्रतिपादयन्ति, तदुत्पत्तिस्तु किंविशिष्टात् ब्रह्मण इति त एव वदन्तु। अनेन हि श्रीभाष्यग्रन्थेन चिदचिद्विशिष्टमेव ब्रह्मेति वादोऽपि निरस्यत इव स्वयमेव। अधिकं च बहु कृत्स्नप्रसक्त्यधिकरणमाश्रित्य वेदान्तपरिभाषाभूमिकायामुपक्षिप्तं विमर्शकारैर्लेशतोऽपि नालोचितम्।

ब्रह्मनिरवयवत्वविचारः।

अत्र निरवयवशब्दस्य निरवयवप्रायपरत्वोपपादनेन तच्छब्दास्वारस्यमर्धाङ्गीकारेण विमर्शकारा अनुमन्यन्ते। अवयवशो विभागासहत्वेनैव निरवयवत्वं यदि विमर्शकाराः श्रीभाष्यकारा वा मन्यन्ते, तर्हि कथं घटादिकमपि सावयवम्? तेऽपि हि घटकपालयोरपृथक्सिद्धिसम्बन्धेनावयवशो न विभागार्हा भवन्मतरीत्येति कथं सावयवाः? सर्वथा शरीरशरीरिभावेन ब्रह्माव्यक्तयोः ब्रह्मकारणताव्यपदेशादिकं कृत्स्नप्रसक्त्यधिकरणविरुद्धमेव।

शरीरशरीरिभावस्य पारमार्थिकस्याश्रौतत्वम्।

वस्तुतस्तु—शरीरशरीरिभावो जीवब्रह्मणोः प्रपञ्चब्रह्मणोर्वा न श्रौतो न वा सौत्रः। अन्तर्यामिब्राह्मणं हि बृहदारण्यके तृतीयाध्याये याज्ञवल्क्यं प्रत्युद्दालकप्रश्नोत्तरत्वेन सूत्रात्मना साकमुपक्षिप्तमिति, "वायुर्वै गौतम सूत्रमि"ति वदुपास्यस्वरूपसमर्पणपरमेव। "यो वै तत्काप्य सूत्रं विद्यात् तं चान्तर्यामिणमि" ति सूत्रेऽन्तर्यामिणि चैकमेव विद्यात्पदं विद्यमानमुभयोरपि ज्ञेयब्रह्मातिरिक्तत्वं गमयतीति, न वस्तुगत्या शरीरित्वमन्तर्यामिणो विवक्षितम्। अन्यथा "न च स्मार्तमतद्धर्माभिलापात्" "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इत्यन्तर्यामिणः शारीरत्वनिषेधः कथमुपपद्यते? यद्यपि शारीरपदमत्र जीवपरं मन्यन्ते श्रीभाष्यकाराः। इदमेवात्र पर्यनुयोगस्य तात्पर्यम्—यत् जीवपरामर्शार्थमेव

"अनुपपत्तेस्तु न शारीरः". इत्यदाविवात्रापि शारीरपदप्रयोगादशरीरत्वमेव परमात्मनः सर्वत्र विवक्षितमिति सूत्रकाराशय इति । "अत्रोभयेऽपि भेदेनैनमधीयते" इति शारीरस्य परमात्मना भेदस्य श्रुतिगम्यत्वं बोध्यमानमपि न शरीरशरीरिभावः सार्वदिक इति गमयति । न हि शरीरशरीरिणोर्भेद एवात्यन्तिक इति भवतामपि मतम्, अन्यथाऽपृथक्सिद्धिसम्बन्धासंभवे तादात्म्यप्रतीतेरेवानिर्वाहात् । सर्वमिदमभिप्रेत्यैवास्माभिर्भूमिकायां शारीरत्वं परमात्मनः कल्पितमुपासनार्थमित्येव सूत्रकाराशय इति वर्णितमिति पुनरपीदमेव पर्यनुयुज्यते - ब्रह्मणश्चेतनाचेतनात्मकजगतश्च शरीरशरीरिभावः कुत्रोक्त इति ? एतेन—नात्रोपासनं किमप्युपदिश्यते, अज्ञाततत्त्वबुबोधयिषया चोपदेशः ; नात्रोपासनागन्धोऽपीति शङ्कापि—परास्ता ; उपासनागन्धस्याप्यभावे कथं ब्रह्मसिद्धिः ? उपास्यतयैव खलु सर्वत्र ब्रह्म सिद्ध्यतीति भवतां मतम् । यत्तु विमर्शकारैरत्र—"नन्वीश्वरोऽपि शरीरे भवति, सत्यं शरीरे भवति, न तु शरीर एव भवती"ति भगवत्पादवाक्यमनुसंहितम्, तदिदं यदि स्वमतसमर्थनार्थम्, तर्हि तु बाधितम्, नहि भवन्तोऽपि ईश्वरः शरीर एव न भवतीति मन्यन्ते ।

जीवशरीरत्वायोगः

अनेन तु विज्ञायते—यत् कादाचित्कमेव शारीरत्वम्. चेष्टावदन्त्यावयवादिशरीरसम्बन्ध इवान्यसम्बन्धे न शरीरपदव्यपदेशः प्रयोजक इति; अन्यथा जीवस्यापि भगवच्छरीरत्वमेवेति भवन्मते "आत्मानं रथिनं विद्धि-शरीरं रथमेव तु" इति आत्मनः पृथक् शरीरग्रहणमनुपपन्नमेव स्यात् । भाष्यस्य परमात्मनो यदि जीवोऽपि शरीरम्,शरीरमपि तु शरीरम्, तर्हि रथिरथोभयभावोऽत्र वर्णितोऽनुपपन्नः स्यात । तदर्थं च जीवस्याशरीरत्वविवक्षायामपि याग्रः । "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" इति सूत्रयन्तः सूत्रकारा अपि तद्धर्मव्यपदेशपदेन सर्वनियन्तृत्वात्मत्वामृतत्वादिकं विवक्षन्तीति भगवत्पादाः । श्रीभाष्यकारास्तु सर्वनियन्तृत्वं सर्वशरीरकतया सर्वात्मत्वमित्यादिकं विवक्षन्ति सुबालोपनिषदेकवाक्यतामपि मन्वानाः । तत्रेदमेवास्माभिरालोच-

नीयम्—यत् पृथिव्यादिशरीरकत्वांशोऽपि मुख्यतया विवक्षितो वा नवेति। तत्र भगवत्पादाः आत्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते इति पृथिव्यादिशरीरकत्वांशो न प्रधानतया विवक्षित इति मन्यन्ते। प्रतिपर्याय-ममृतत्वमात्मत्वचैकरूपं यथा वर्तते, न तथा पृथिव्यादिशरीरकत्वम्। अयं भावः—यच्छब्दघटितवाक्यानां तच्छब्दावधिकार्थांशोऽनुवादकत्वस्यैव न्यायसिद्धत्वात् "एष त आत्मेन्य"तः पूर्वतनभागावगतस्य तस्यानूद्यमानत्वा-च्छ्रुत्यतात्पर्यविषयत्वं मन्तव्यम्। तथाच पृथिव्यादिशरीरकत्वांशे न तात्पर्य-मन्तर्यामिब्राह्मणस्य।

ब्रह्मणोऽशरीरत्वे प्रमाणसङ्ग्रहः।

अत एव सुबालोपनिषदि—"यस्य पृथिवी शरीरम्"इत्यादिना सर्वशरी-रकत्ववर्णनानन्तरम्—"दिव्यं देवमसङ्गं शुद्धं तेजस्कायमरूपं सर्वेश्वरमचिन्त्य-मशरीरं निहितं गुहायामि"ति तस्याशरीरत्वनिर्देश उपपद्यते। तदिदं सिद्धम्—यत् विद्यमानतादशायामपि न सर्वं भगवच्छरीरमेव वर्तत इति। एतेन—तत्तत्कालविद्यमानसर्वपदार्थशरीरकं ब्रह्मेत्यस्मत्पक्ष इति विमर्शोक्तिरपि—परास्ता; सूक्ष्मचिद्चितामेव सार्वदिकत्वात्, तत्तत्कालविद्यमानसर्वप-दार्थशरीरकं ब्रह्मेत्यस्मत्पक्ष इति वदन्त आचार्यवर्या ये खलु सुबालोपनि-षदनुसारेणाव्यक्तमपि भगवच्छरीरमिति मन्यन्ते,अव्यक्तं च नित्यमिति कथमे-तत् पृच्छन्ति—यत् सूक्ष्मचिदचिद्विशिष्टत्वमेव सार्वदिकमिति को वाऽवोचत् इति। "रूपोपन्यासाच्चे" त्यन्तराधिकरणेऽग्न्यादीनां केवलमूर्धत्वादि-परवाक्यजातानि संगृह्णन्तः सूत्रकाराः श्रीभाष्यकारा वा कथमग्न्यादिकं भगवतः उपास्यस्यैव शरीरमिति न मन्यन्ते। नहि जीवादयोऽपि निर्दिष्टाः केनचनावय-वरूपेण। रूपोपन्यासश्चायं काल्पनिकरूपाभिप्रायः। एतेन—रूपोपन्यासादिति सूत्रं स्वोपष्टम्भकतयोपन्यस्यन्तो विमर्शकाराः कथं नास्मान् विस्मापयन्ति। सर्वथातु न कारणवाक्यं किमपि सूक्ष्मचिदचिच्छरीरकं ब्रह्म कारणतयानुवदति। तत्रेदं प्रथमत उपपादयामः—यत् सूत्रकाराभिमतानि सूत्रकाराभिमततया श्रीभाष्यकाराभिमतानि वा "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्ये-

दमग्र आसीदि'' त्युपक्रम्य प्रवृत्तं "तदैक्षत बहु स्यां प्रजायेय" ( आनन्दमयपर्यायगत ) "सोऽकामयत" "आकाशाद्ध्येव खल्विमानि भूतानि जायन्ते" 'यः सर्वज्ञः सर्वविदि''त्यादिवाक्यानि लेशतोऽपि सूक्ष्मचिदचिच्छरीरकं न ब्रह्म परामृशन्ति; तत्र तस्याप्रकृतत्वात्, "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्''इत्यत्रापि स्पष्टं शरीरिणो ग्रहणमित्यत्र न गमकं वर्तते। अन्तर्यामिब्राह्मणे तु बृहदारण्यकगते सुबालोपनिषद्गते वा न कार्यकारणभावः श्रूयते इति, कथं सूक्ष्मचिदचिच्छरीरकमेव ब्रह्म कारणमिति सूत्राशयः श्रुत्याशय इति वा निर्णीयते? तथाचाव्यक्तशरीरकत्वनिर्देशोऽपि कारणस्यैव ब्रह्मणः तदुपहितत्वाभिप्राय एव योजनीयः, येन शरीरित्वमिवाशरीरित्वमपि तत्र तत्रोच्यमानं सुतरामुपपद्यते।

आत्मबहुत्वे सूत्रकाराशय परीक्षा।

साङ्ख्याभिमतप्रधानकारणतावादादिव इव तदभिमतात्मबहुत्वांशोऽपि यद्यपि प्रतिक्षेप्यः सूत्रकाराणाम्, परन्तु कारणस्वरूपे स्वविरुद्धमतान्तरनिरास एव द्वितीयाध्यायद्वितीयपादार्थ इति, न सोऽप्यंशस्तत्र सूत्रकृता समालोचितः। सूत्रकाराभिमतं त्वात्मैकत्वमेव, नतु तद्बहुत्वम्, यत्तु देहाद्युपाधिप्रयुक्तमौपाधिकमेवेत्यात्मस्वरूपविचारप्रसङ्गे''ऽशो नानाव्यपदेशादि''त्युपक्रान्तेंऽशाधिकरणे "अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" इत्यादौ विवेचितमेव।

श्रीभाष्यकाराणामनुज्ञापरिहार सूत्रविवरणपरीक्षा।

श्रीभाष्यकारा हि सर्वेषां ब्रह्मांशत्व-ज्ञत्वादिनैकरूपत्वेनानुज्ञापरिहारासम्भवशङ्कयेदं सूत्रमवतारयन्ति। इदमेवात्र पृच्छामः—यत् स्वरूपतो भिन्नानां जीवानां केनचन धर्मेण साम्यमात्रेण कथं विधिनिषेधानधिकारशङ्कोत्थितिः? ब्रह्मांशत्वेन परस्परसाम्यं जीवानां कर्माधिकारिणामेव; ब्राह्मणत्वादिकं तु विशिष्टकर्माधिकारप्रयोजकम्, नतु सामान्यतोऽनुज्ञापरिहाराधिकारप्रयोजकम्। जीवस्वरूपमवलम्ब्य कर्माधिकारो जीवस्य ब्रह्मभेदे सत्येव भवतीति शंकैव हि सांप्रतं वारणीया। इदमनेन सिद्धं भवति—यत स्वरूपतो

न जीवानामनेकत्वमिति कृत्वैव सूत्रकारेणानुज्ञापरिहारासंभवशङ्काऽनूद्य दूष्यत इति। अत्रानन्तरसूत्रे "असन्ततेश्चाव्यतिकरः" इति देहसम्बद्धमेवानुकृष्या-सन्ततिवर्णनात् स्वरूपतो नाणुपरिमाणत्वम्, किन्तु विभुत्वमिति सिद्धान्तमपि सूत्रकाराः सूचयन्ति। अत एवाभासत्वनिरूपणानन्तरमदृष्टानियमेनानुज्ञाधिकारिणां बहूनां विभूनां निराकरणमुपपद्यते।

*"आभास एव चे"त्यादीनां श्रीभाष्यविवरणानुपपत्तिः।*

"आभास एव चे"ति सूत्रेणा"दृष्टानियमादि"ति सूत्रेण चाद्वैतमतनिरासः सूत्रकारेण क्रियत इति सत्यं श्रीभाष्यकारा व्याचक्षते। तानीमानि श्रीभाष्यवाक्यानि—"अखण्डैकरस-प्रकाशमानस्वरूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव। प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितमि"ति। परन्तु नेदं भगवत्पादसम्मताद्वैतमतनिरासपरम्, यत्राज्ञाने श्रीभाष्यकारापादितानुपपत्तीनामेकापि नावकाशते।

अज्ञाने श्रीभाष्यकारापादितानुपपत्तिनिरासः।

अज्ञानस्य ब्रह्मैव चैतन्यरूपमाश्रयो विषयश्चेति भगवत्पादा एव—आक्षेपप्रतिक्षेपपूर्वकं—"कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम्" "इत्यादिना—"*तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुरि*"त्यन्तेन वाक्यजातेन व्यवस्थापयन्ति। "चैतन्यात्मकत्वात्तु नाज्ञानविषयत्वं सम्भवति। <u>ज्ञानाज्ञानयोर्हि विरोधोऽज्ञानपदविभागेनैव गम्यते। ब्रह्म च ज्ञानरूपं कथमज्ञानस्य विषयः? नहि तिमिरेण प्रकाशस्यावरणम्।</u> प्रकाशावरणं नाम प्रकाशनाश एवेति ब्रह्मणोऽज्ञानविषयत्वे स्वरूपनाशप्रसमापद्यते"त्यादीनि ब्रह्मणोऽज्ञानविषयत्वानुपपत्तौ यानि दूषणानि श्रीभाष्यकारा मन्यन्ते, सर्वाणि तानि"प्रत्यगात्मनी"ति पदेन भगवत्पादाः सूचयन्ति। समाधानन्तु—"तद्विवेकेन च"ति वाक्येन भगवत्पादाः प्रमाणजन्यवृत्तिप्रतिबिम्बितस्यैव चैतन्यस्य विद्यापदार्थत्वात् तस्यैवाविद्याविरोधित्वमिति सूचनेन विशदयन्ति। अयमत्र सारांशः—<u>वृत्तिः, तत्प्रतिफलितं चैतन्यं वैवाज्ञानविरोधोत्येवाद्वैतिनो वद-</u>

न्ति । वृत्तिपदार्थस्तु नापूर्वोऽद्वैतपरिभाषामात्रसिद्धो धर्मभूतज्ञानमिवेति, साङ्ख्यादिप्रक्रियावलम्बनेन पूर्वमेव विवेचितम्। तदपरामर्शेनैव तु ज्ञानाज्ञानयोर्विरोधकथामात्रोपक्षेपेणाद्वैतमननिरसनमनुक्तोपालम्भनमेव । एतेन—ब्रह्मणोऽज्ञानाश्रयत्वमपि—व्याख्यातम्। अज्ञानानुमानन्तु—प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, इत्यज्ञानभावरूपत्वमेव विषयीकरोति, नत्वज्ञानम्। तथाच श्रीभाष्योक्तरीत्या प्रकृतानुमान एव व्यभिचारशङ्कापि नावसरति, अनादित्वस्य नाशाप्रयोजकत्वस्य बहुशोऽन्यत्र विवरणादावुपपादितत्वात् न निवृत्त्यनुपपत्तिः। एतेन—निवर्तकानुपपत्तिरपि—परास्ता। वृत्तिः, तत्प्रतिफलितं चैतन्यं वाऽज्ञाननिवर्तकम्, विरोधादिति ह्यनुपदमेव विवेचितम्। स्वरूपं तु तस्यानिर्वचनीयमिति, निर्वक्तुमशक्यत्वमलङ्कार एव। अधिकं च वेदान्तपरिभाषाभूमिकायामस्मदीयायां विशदं विवेचितम्।

सौत्रः साङ्ख्यभिमतात्मबहुत्ववादनिरासः।

एतेन—अदृष्टानियमसूत्रविवरणमपि श्रीभाष्यकाराणां न भगवत्पादीयाद्वैतमतनिरासपरमिति—सूचितम्; नहि भगवत्पादास्तदनुयायिनो वा ब्रह्माश्रयेणादृष्टेनोपाधिसम्बन्धं व्यवस्थापयन्ति, येन—"उपाधिपरम्पराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्था" इत्यादि श्रीभाष्यव्याख्यानामवसरः स्यादिति, विभ्वनेकात्मवादनिरास एव सूत्रकारतात्पर्यविषयः, यो भगवत्पादैरत्र व्यवस्थाप्यते। एतेन—आत्मबहुत्ववादी साङ्ख्यः किं तदंशो प्रतिक्षिप्यते ? इत्यादिपर्यनुयोगोऽपि निरवकाश इति सूचितम्।

आत्मोत्पत्तौ श्रीभाष्यमतसमालोचनम्, जीवब्रह्मसामानाधिकरण्यपरीक्षा च।

वियत्पादविषये भूमिकायामुक्तानि बहूनि विमर्शकारैर्नांशतोऽपि चुम्बितानि। नित्यस्येऽप्यात्मनः न वियदादिवत्कार्यत्वम्, किन्तु रूपान्तरेण। स्वरूपतः खलु वियदादि कार्यम्, आत्मा तु धर्मभूतज्ञानसंकोच-विकासद्वारा कार्यकोटिप्रविष्टः। रूपान्तरेणात्मनः कार्यत्वं वियदादीनां न रूपान्तरेणेति कथमिदं संभ-

वति ? कथं चेयं कल्पना सूत्रारूढेति विषयमधिकृत्य तु विमर्शकारा एवं वदन्ति। "नैकैव रीतिस्सर्वत्र सर्वैरादरणीयेति नियमः" इति। नहि वयमपि रीति-परिवर्तने नाधिकारो भवतामिति' वदामः, किन्तु सूत्रकारानभिमतं तदयुक्त-मिति।

सत्यमद्वैतिनो जीवानां ब्रह्मणश्च सामानाधिकरण्ये विषये केचनैकामेव-रीतिं बाधायां सामानाधिकरण्यं जीवस्यापि विवर्तत्वमते स्वीकुर्वन्ति, व्यक्तं चैतत्सिद्धान्तलेशसंग्रहे, केचन तु जीवेन ब्रह्मणः सामानाधिकरण्यमभेद इति। उभयत्रापि तु स्वरूपचैतन्यमात्रसत्यत्वस्याद्वैत्यभिमतस्य तु न बाधः। उभयत्र विशिष्टजीवकार्यत्वानित्यत्वादि तु समानमिति, नाद्वैतमते वियद्विशिष्टजीव-यो रीतिपरिवर्तनम्। एतेन—"किं भवन्त एकामेव रीतिं वर्णयन्ति वियदादे-ब्रह्मणश्च सामानाधिकरण्यविषये" इत्यादि पर्यनुयोगोऽपि छिन्नमूल इति सूचि-तम्। शरीरकार्यत्वादेव जीवस्य कार्यत्वं विशिष्टस्यैव,शुद्धस्य तु नित्यत्वमेवे"ति "नात्मा श्रुतेरि"ति सूत्रतात्पर्यम्। तथाच तत्त्वमसीतिवाक्ये विशिष्टग्रहणे बाधायां सामानाधिकरण्यम्, शुद्धविवक्षायां तु अभेद इति "चराचरव्यपाश्र-यस्तु" "नात्मा श्रुतेरि"ति सूत्रद्वयमपि सार्थकम्। "नात्मा श्रुतेरि"ति सूत्रेण वियदादिवदुत्पत्तिनिषेधे श्रुतिवशेन नित्यत्वश्रवणमेव हेतुरुच्यते। तेन चोत्पत्तिश्रुत्यपेक्षया नित्यत्वश्रुतेर्बलवत्त्वमेव प्रतिपाद्यत इति प्रबलश्रुतिबा-धितोत्पत्तिः प्रकारान्तरेण तदुत्पत्तिमपि कल्पयतीति कथं सूत्रकाराभिमत-मिति संभवति ?

वस्तुतस्तु जीवस्य रूपान्तरेण कार्यत्वमपि भवद्भिर्यदि सूक्ष्मचिद्वि-शिष्टब्रह्मकार्यत्वमभिप्रेत्योच्यते, तर्हि रूपान्तरेण जीवः कार्यभूतः कस्य परिणाम इति वक्तव्यम्। यद्यचिदंशस्य, तर्हि बाधितम्। ब्रह्मां-शस्तु न भवतां परिणामिकारणम्। सूक्ष्मचिदंशोऽपि कारणकोटौ यदि प्रवे-श्यते, तर्हि नित्यभूतोऽपरो जीवः परमात्मशरीरं प्रकृतिरिव कश्चन वर्तत इत्यत्र प्रमाणं वक्तव्यम्। नहि सूत्रकाराः कुत्रापि जीवान्तरं तादृशं सूत्र-यन्ति। शरीरादिविशिष्टस्य तु जीवस्य कार्यस्यैकेन रूपेण नित्यत्वमपि वर्तत

इत्यत्र न किमपि प्रमाणं प्रदर्श्यते सूत्रतः श्रीभाष्यकारैरपि। कार्यशरीरावच्छेदे-नौपाधिकं जन्यत्वमेव स्वीकृत्य निर्वाहस्तु सूत्रकारसूचित इति "चराचरव्यपाश्रयस्तु" इति सूत्रानुसारेणास्माभिरुपपादितमेव। शरीरविशिष्टस्यैव नित्यत्वं कार्यत्वं चेति स्वीकारेतु विशेषणीभूतशरीरादीनां ब्रह्माकार्यत्वात् ब्रह्मशरीरत्वा-निर्वाहः। इदमेवाभिप्रेत्यास्माभिः– "यदि शरीरविशिष्टस्यैव जीवस्यांशत्वम्, तर्हि सर्वस्थूलाचिद्वैशिष्ट्यं बाधितम्। परम्परया सशरीरत्वं बाधितमिति परि-भाषाभूमिकायामेव विशदमुपक्षिप्तम्। तदिदं सिद्धम्—यत् जीवब्रह्मणोः सामानाधिकरण्यं स्वरूपैक्यनिबन्धनमेव। अत एव तृतीयाध्यायतृतीयपादे जीवगतावस्थात्रयपरीक्षणानन्तरम्—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इति ब्रह्मनिर्गुणत्वं सूत्रकारव्यवस्थापितमुपपद्यते। श्रीभाष्यमतेतु शरीरशरीरिभावप्रयुक्तभोक्तृत्वादिशङ्काया बहुशः पूर्वत्र समाहितत्वात् व्यर्थमिदमधिकरणमापद्येत।

स्वाप्निकमायामात्रत्वादिव्यवस्थापनस्याद्वैतमत एवोपयोगः।

अत्र स्वाप्नार्थपरीक्षा स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्य-सिद्ध्यर्थेत्युपक्षेपेण विमर्शकारा विस्मापयन्त्यस्मान्, यतः प्रथमाध्यायादिषु निखिलप्रपञ्चस्रष्टृत्ववर्णनेनाप्ययमप्यर्थः सिद्धो भवति। नहि श्रीभाष्यकार-मते यत्र सर्वं ज्ञानं प्रमात्मकम्, तत्र न स्वाप्नार्था जाग्रत्प्रपञ्चादिविलक्षणा भवन्ति, येन तन्निरूपणं पृथक् सावसरं स्यात्। न वयं वेदान्तसारावल्यां पादार्थोऽन्यथा न वर्णित इति वदामः। इदमेव वयं मन्यामहे नायं पादार्थः सूत्र-काराभिमत इति। जीवब्रह्मणोरभेदनिरूपणार्थं तत्त्वंपदार्थशोधनमेव हि तृतीया-ध्यायतृतीयपादेन सूत्रकाराः कुर्वन्ति, येन जीवब्रह्मणोरभेदोऽपि निरूपित-प्रायः स्यात्।

"अधिकं तु भेदनिर्देशादि"त्यादिसूत्रोपात्तभेदनिरासस्य
यावत्साक्षात्कारमात्यन्तिकभेदश्रुतीनां
प्रामाण्यस्य च सौत्रत्वम्।

एतेन—यदि जीवब्रह्मणोरभेदप्रदर्शनमिष्यते सूत्रकृता, तर्हि इतरव्य-

पदेशाधिकरणे श्रुतिबलेन स्पष्टं सिद्धान्तितो जीवब्रह्मभेदः किमर्थं न प्रतिषि-
ध्यते केनापि सूत्रेणेति शङ्काऽपि—परास्ता। स्पष्टं हि सूत्रकारा 'भेदादिति-
चेन्न प्रत्येकमतद्वचनादि'' ति भेदं भेदव्यपदेशादिसूत्रानूदितमनूद्य निषेधन्ति।
इदमेव सूत्रमस्माकं भेदव्यपदेशादिसूत्राणामौपाधिकभेदपरतया व्याख्याने
गमकम्। ततश्च वयमपीदमूरीकुर्महे भवन्त इव—''नैकामपि भेदश्रुतिमभे-
दश्रुतिं वा बाधितुमिच्छन्ति सूत्रकाराः। माध्यस्थ्यमवलम्ब्य सन्धिमेव कुर्व-
न्ति विरुद्धवदवभासमानयोः श्रुत्योरि'' ति, स्वतन्त्रमत्यन्तभेदेनाम्नानम-
त्यन्ताभेदेन चाम्नानमेकतरस्यौपाधिकत्वकल्पनेन यथोपपद्यते, न तथा शरी-
रशरीरिभावकल्पनेनेति, शरीरशरीरिभावः श्रीभाष्यकाराभिमतोऽत्यन्ताभेदे-
ऽत्यन्तभेदे च न संभवतीति, सूत्रकाराणां केवलाद्वैताशयत्व एव मध्यस्थता भव-
दभिमता समर्थयितुं शक्यते, नान्यथा।

अभेदवादस्य सौत्रत्वम्।

एतेन—''नानाव्यपदेशादि''ति भेदस्य वाचनिकं ग्रहणं दृश्यते,ब्रह्माभेदं
तु न वाचाऽपि निर्देष्टुमिच्छति सूत्रकारः। ''अन्यथे''ति तु कथञ्चिदंशाधिक-
रणे सूचयत्यभेदव्यपदेशमिति विमर्शोऽपि—परास्तः। ''सूचनात् सूत्रमुच्यते''
इति सूत्रकारसूचितं कथं न तदनभिमतं भवतीति भवन्त एव समालोचयन्तु।
वस्तुतस्तु अभेदस्तु भेदाभावरूपो भेदमिथ्यात्वसूचनेन भेदनिषेधपुरस्सरमेव
सूत्रणीय इत्येव सूत्रकारा मन्यन्ते। अत एव ''भेदादिति चेन्न प्रत्येकमतद्वच-
नात्'' इति अतद्वचनादिति अभेदवचनादिति स्पष्टं सूत्रयन्ति सूत्रकारा
अभेदं स्वावसरे। श्रीभाष्यमते हि भेदशब्देन प्रथममवस्थाभेदे लक्षणा,
द्वितयतश्चातद्वचनशब्देनानुपस्थितस्यामृतत्वस्य परामर्श इत्यादिकं भूमिकाया-
मुपक्षिप्तम्।

''न स्थानतोऽपी''ति सूत्रार्थविचारः श्रीभाष्याद्वैतभाष्यसमीक्षा च।

''न स्थानतोऽपि परस्ये''ति सूत्रे हि नञः श्रवणात् सत्यं वयमपि पश्या-
मो भवन्त इव किञ्चिदत्र निषेध्यं सूत्रकारा मन्यन्त इति। निषेध्यं च प्रसक्तमेव नाप्रस
क्तमिति,किं सूत्रोपात्तमेवोचितमुताध्याहृतमिति तु विप्रतिपन्नमिदम्। अत्र स्थान·

तोऽपोत्यपिशब्देन समुच्चयार्थेनान्वयात् नञः स्थानतः स्वरूपतश्चोभयलिङ्गं न ब्रह्मेति स्वरसमन्वयो भवति भगवत्पादमते । सत्यं प्रजापतिवाक्यमात्रस्यात्र विचार्यत्वे स्थानप्रयुक्तदोषशङ्कामात्रं तद्वाक्यदृष्ट्या प्रसक्तमिति न स्थानतो दोष इति, दोषस्याध्याहार इति समस्त्यवसरः कल्पनाया अस्याः, परन्तु नेदं संभवति, यतः सर्वत्रपदवैयर्थ्यमत्र समापद्येत । 'सर्वत्र' पदप्रयोगेण हि सर्वेषां वेदान्तवाक्यानां विवक्षा, "सर्वत्र प्रसिद्धोपदेशादि"त्यादौ क्लृप्तेति,सर्ववेदान्ततात्पर्यविषय एवात्र विचार्यते; नतु वाक्यविशेषगृहीतापुरुषार्थगन्धशङ्कानिषेधादिकम् । स्पष्टं हि "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्रो वै, सशरीरः प्रियाप्रियाभ्याम्, नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"ति वाक्यं शरीरासम्बन्धेनैव ब्रह्मणोऽपुरुषार्थगन्धं निषेधति, नतु शरीरसम्बन्धमपि सिद्धवत्कृत्येति, प्रजापति वाक्यावगते स्वप्नाद्यवस्थाद्वारेण निर्दिश्यमाने च नापुरुषार्थगन्धशङ्काया अवसरः । स्थानपदं हि—"स्थानादिव्यपदेशोपपत्तेश्चे"त्यादाविव नियम्यस्थानमेवात्रापि परामृशतीति, स्पष्टमिदं विज्ञायते—यत् सूत्रकारा अत्र स्थानसम्बन्धनिषेधेनाशरीरमेव ब्रह्म निर्देष्टुमिच्छन्ति सर्ववेदान्तप्रतिपाद्यतया । यच्चात्र पौनरुक्त्यं श्रीभाष्यतत्परिहारोपमर्दनमुखेन भूमिकाद्युपक्षिप्तम्, तत्र विमर्शकारैः श्रीभाष्यगतपरिहारांशमात्रमनूदितम्, नतु तदुपरि प्रदर्शितं दूषणं समालोचितम् । तदिदं सिद्धम्—यत् "न स्थानत" इति सूत्रगतस्य नञो न दोषेणाध्याहृतेनान्वयः । सम्बन्ध्याकांक्षा हि श्रुतेनोभयलिङ्गपदेनैव समर्प्यते । नहि प्रजातिवाक्यश्रवणानन्तरं कस्यापि ब्रह्मणि दोषशङ्का समापतति ।

भगवत्पादमते "सर्वत्र ही"ति हेत्वंशेऽध्याहारदोषाभावोपपत्तिः ।

"सर्वत्र ही"ति हेत्वंशे तु नाध्याहारदोषः, यतः—अनन्तरसूत्रगतमतद्वचनपदमत्रानुषज्यते । अतद्वचनपदेन त्वनुभयलिङ्गवचनं विवक्ष्यते । तच्च निर्विशेषवचने पर्यवस्यतीति भगवत्पादमततात्पर्यम् । एतेन—हेतुदलस्य स्वेष्टानुसारेणाध्याहारो न न्याय्य इति शङ्कापि—परास्ता । नहि सूत्रानुपस्थितं किमप्यत्र योज्यतेऽस्माभिः , भवन्मते तु दोषादिपदस्य सूत्रानुपस्थितस्याध्याहारान्नानु-

पङ्गः । एतदेवाभिप्रेत्यास्माभिरस्मदीयभूमिकायाम्—सर्वत्र हीत्यत्र तु निर्विशेषमेवेत्यध्याहार इव भवतीतीवशब्दः प्रयुक्तः । सर्वत्रातद्वचनपदेन तात्पर्यतो निर्विशेषपरत्वमेव विवक्ष्यत इति न हेतोरसिद्धिः । तथाच सर्वाणि वेदान्तवाक्यानि, न सविशेषब्रह्मपराणि, निर्विशेषैकतात्पर्यकत्वादिति न्यायप्रयोगस्यैवात्र विवक्षितत्वान्न दोषः । भवन्मते तु ब्रह्म, निर्दोषम्, सर्वत्रोभयलिङ्गत्वादित्यत्र न केवलं सर्वत्रपदम्,किन्तूभयपदमपि व्यर्थमिति, व्यर्थविशेषणत्वात् व्याप्यत्वासिद्धिः । सूचितं चैतत्परिभाषाभूमिकायामेव—सत्यकामत्वादिलिङ्गान्तरसमर्थनस्य को वोपयोगः,'यतो निरस्तसमस्तदोषत्वमेकमेव तत्र पर्याप्तमिति ग्रन्थेन ?

"भेदादिति चेन्न प्रत्येकमतद्वचनात्''इति सूत्रान्तरं तु सत्प्रतिपक्षानुमानान्तरनिरासार्थमेव । "यथा हि निर्विशेषवाक्यगम्यत्वेनोभयलिङ्गत्वनिषेधेन निर्विशेषपरत्वं व्यवस्थाप्यते, एवं सविशेषवाक्यप्रतिपाद्यत्वेनाप्युभयलिङ्गत्वनिषेधेन सविशेषपरत्वमेव वेदान्तानां भवत्वि''ति शङ्का हि प्रत्युपाधि तदसम्बद्धस्वरूपप्रतिपादकत्वात् सविशेषवाक्यानां न परमतात्पर्यविषयत्वम्, किन्त्वनुवाद एवेति प्रतिपादनेन निरसनीयेति,भेदादिति सूत्रान्तरम् । पूर्वत्र केवलमद्वचनत्वं हेतुरत्र तु प्रत्येकमद्वचनत्वमिति निष्कर्षः । सति चैवमुभयलिङ्गत्वाभावमात्रस्य साक्षान्निषेधात् निर्विशेषप्राधान्यात् निर्विशेष एव वेदान्तानां पर्यवसानमिति सूचनार्थम्—अरूपवदेव हीति सूत्रमित्याद्युत्तरत्र स्पष्टीभविष्यति ।

अनुषङ्गायनपक्षमेव सर्वत्रहीत्यस्यैव हेतुसमर्पकत्वम् ।

अथवा—"सर्वत्र हि'' इति सर्वतादात्म्यमेव "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'' इति वाक्यसिद्धं सर्वोपादानताप्रयुक्तं विनानुषङ्गमध्याहारं वा हेतुरत्र विवक्ष्यते, सति चैवं पृथिव्यादिशरीरसम्बन्धः न पारमार्थिकः, यतो बाधायामेव सामानाधिकरण्यं सर्वत्र । न हि कुत्रापि ब्रह्म पृथिव्यादिशरीरं समानाधिकरणतया निर्दिष्टम् ।

अन्तर्यामिब्राह्मणेऽपि हि"यस्य पृथिवी शरीरमि'त्यादिना भेदेनैवोपदेशो दृश्यत इति, न शरीरशरीरिभावादिकं वास्तवमिति,नोभयलिङ्गं ब्रह्मेति युक्तमिति सूत्रार्थः । तथाच ब्रह्म, न स्थानादिप्रयुक्तसविशेषत्व-स्वरूपप्रयुक्तनिर्विशेषत्वो-

भयवत्, सर्वतादात्म्येनाम्नायमानत्वात्, इत्यनुमानप्रयोगोऽत्र विवक्षितः। यथा-चोभयलिङ्गत्वे सविशेषत्वं नोपपद्यते, तथा पूर्वमेव सूचितम्। अत्र पक्षे सर्वता-दात्म्यं सविशेषस्यैव भवतु,इति शङ्कावारणार्थम्—"भेदादिति चेन्ने"ति सूत्रम्। परिशेषानुमानपरम्—"अरूपवदि"ति सूत्रमिति विवेकः। सगुणवाक्यानि हि सर्वाणि बहून्यपि वा न तात्पर्यतः सगुणपराणीति घण्टाघोषोऽयमद्वैतिनामिति,—किमर्थं वा विमर्शकारैरिदमुपक्षिप्यते वारं वारं—यत् भूयस्यः सगुण-श्रुतयः, सगुणविद्यापराणि च दृश्यन्ते सूत्राणि बहूनीति।

अन्तर्यामिब्राह्मणादीनामवान्तरवाक्यत्वव्यवस्था।

ततश्चायमेवार्थः सूत्रकाराभिमत इति विज्ञायते—यदन्तर्यामिब्राह्मणादि सगुणं वाक्यं सर्वं निर्विशेषपरमिति। यद्यपि नेदानीमन्तर्यामिब्राह्मण-स्य निर्विशेषपरत्वं व्यवस्थापितमिति हेत्वसिद्धिशङ्का—"न सामान्यमात्रमनि-र्धारितविशेषं हेतूक्रियते विपाश्चिता केनापीति विमर्शोपादिता" "न स्थानतः" इति सूत्रमात्रसाहाय्येनास्माभिरर्थस्यास्य साधने सावसरा, परन्तु "भेदा-दिति चेन्ने" ति शङ्कापूर्वकमुक्तसमन्वयस्य साधनान्न दोषः। एवंच प्रथमसू-त्रोपात्तहेतुसमन्वयार्थं द्वितीयसूत्रमिति व्याख्यातं भवति। सति चैवमशा-रीरमेव ब्रह्म सर्वत्र विवक्षितमिति पर्यवसित एवार्थः स्पष्टमुपपाद्यते सूत्र-कारैः—"अरूपवदेव हि तत्प्रधानत्वात्" इति। नह्युभयसम्मतेनैव हेतुना सूत्र-काराः सर्वत्र साध्यं साधयन्ति; किन्तु स्वासाधारणेन स्वयं साध्यमानेनापीत्यव-श्यमिदमूरीकर्तव्यम्; अन्यथा मुख्यमीक्षितृत्वादिकं प्रधानवादादिनिरासार्थ-तया सूत्रकाराभिमतं न साङ्ख्यानामपि साधारणमिति प्रधानकारणवादनिरा-साद्यसम्भवदुक्तिकं स्यात्। एतेन— हेतुनिर्देशश्च पक्षद्वयसाधारण इति विमर्शो-क्तमपि चिन्त्यमिति—सूचितम्। वस्तुतस्तु—प्रतिपर्यायमेकात्मप्रतिपादनम्, वाक्यविशेषेषु निर्गुणस्वरूपप्रतिपादनं च साधारणमेवात्र हेतुतया निर्दिश्यते। हेयगुणराहित्यादिपरतया सङ्कोचे तु न प्रमाणम्, न वा कुत्रापि तथा सूत्रकारैः सूचितम्।

पुनरपि "न स्थानतोऽपि" इति प्रथमसूत्रार्थसाधितस्यैव वा तन्मत उपपादनात् अरूपवत्सूत्रवैयर्थ्यमपि समापतति। अरूपपदं बहुव्रीहिसमासेन निर्गुणं बोधयति, अरूपवत्पदमपि तद्धितान्तस्य रूपवत्पदस्य नञ्तत्पुरुषेण तु निष्पन्नं तदेव बोधयति। सति चैवमरूपमित्येव वक्तव्ये अरूपवत् इति प्रयोगः कथं श्रीभाष्यमतानुयायिनामेवानुकूलम्। मात्रालाघवं तु वैयाकरणानामेव पुत्रोत्सवाय, न वैयासिकानामपि। ब्रह्म निर्गुणमिति बोधनं ह्यवाङ्मनसगोचरस्येदन्तया निर्देशासंभवात् न संभवतीति, "अथात आदेशो नेति नेति" इति प्रक्रियया रूपवत् न ब्रह्मेत्यादिरूपेणैव हि ब्रह्म निरूपणीयमिति मतुप्सार्थक्यमद्वैतमतेऽपि संभवत्येव। सत्यं श्रीभाष्यकारा अत्र तत्पदं स्वरसमेव मन्यन्ते, परंतु नैतद्युक्तम्, वैयर्थ्यात्। प्रकरणादेव हि तदर्थलाभः संभवति, 'प्रधानत्वात्' पदमपितु श्रीभाष्यमते न स्वरसम्। प्रधानत्वपदेन हि मुख्यत्वादित्येव स्वरसतोऽर्थः प्रतीयते, न तु निर्वाहकत्वादिति। अनेन चेदं ज्ञायते—यत्सत्यं सगुणमपि वेदान्तेषु प्रतिपाद्यते, परन्तु न तन्मुख्यम्, किन्तु निर्गुणमेवेति। श्रुतौ हि उपासनार्थं ब्रह्मणो बहूनि रूपाणि कल्प्यन्त इति तु सत्यम्, तात्पर्यविषयत्वं तु न तेषु गुणेषु; अन्यथा "मनो ब्रह्मेत्युपासीत" इत्यादौ कल्पितं मनसो ब्रह्मत्वमपि पारमार्थिकं स्यादिति। उपासनाविषयास्तु अन्यत्र कल्पिता दृष्टा इति, कथं ब्रह्मण्यप्युपास्ये सत्यकामत्वादयो न कल्पिता भविष्यन्ति। श्रीभाष्यकारा हि पुरुषार्थत्वात् ब्रह्मण उपास्यस्य पारमार्थिकं सगुणत्वमपि समन्वय सूत्रेण प्रतिपादयन्ति, परन्तु समन्वयशब्दस्य तात्पर्यविषयत्वादित्यस्मिन्नेवार्थे स्वारस्यात्, पुरुषार्थतयाऽन्वयादिति विवरणं न सूत्राक्षरानुगुणमिति सर्वविदितमिदम्। एतेन—ब्रह्मुपासनार्थानां परमार्थतेत्यस्ति नियमः; तथा सति "आत्मेत्येवोपासीते"त्युपास्यतया निर्दिष्टस्यात्मैक्यस्याप्यपारमार्थ्यप्रसङ्गात्" इति मार्ताण्डोक्तिरपि—व्याख्याता; नहि भगवत्पादा अत्रोपासनां मन्यन्ते; इतिपदसमभिव्याहारात्, किन्तु ज्ञानमेवेति बृहदारण्यकभाष्य एव व्यक्तम्।

*प्रकाशवच्चेति सूत्रार्थसमीक्षा।*

अत एव "प्रकाशवच्चावैयर्थ्यमि"ति सूत्रमपि सावसरं भवति। यत-

स्तात्पर्यविषयत्वे गुणानां ब्रह्मणि तत्कल्पनावैयर्थ्यशङ्का स्वरसत उदेतीति, तत्समर्थनमत्र काम्यते प्रकाशदृष्टान्तेन। अत्र प्रकाशपदेन लोकसिद्ध-प्रकाश एव दृष्टान्ततया विवक्षणमर्हति, ननु "सत्यं ज्ञानमि"ति वाक्यम्। न हि सूत्रकाराः क्वापि "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्यं निर्विशेषप्रकाशस्व-रूपब्रह्मपरं मन्यन्त इति श्रीभाष्यानुयायिनो वक्तुमर्हन्ति, येन—"सत्यं ज्ञान-मनन्तं ब्रह्मे"त्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते, "यथा सत्यं ज्ञान-मित्यादिवाक्यावैयर्थ्यात् प्रकाशस्वरूपत्वं ब्रह्मणोऽङ्गीक्रियते," इत्यादि भाष्यमनुपपन्नं भवति। यदि तु परमतरीत्या दृष्टान्तः, तर्हि तु परमते सगुण-वाक्यानाम्यवान्तरप्रामाण्यस्वीकारान्नाशङ्काया एवोत्थितिः। परे हि सत्या-दिवाक्यं सगुणवाक्यं सर्वं निर्विशेषब्रह्मबोधकतयैव प्रमाणं मन्यन्ते। श्रौत-ज्ञानादिपदपरित्यागेन प्रकाशपदप्रयोगस्वारस्यमपि श्रीभाष्याभिमतं न सूत्रका-राभिमतमिति ज्ञापयति। नहि प्रकाशपदेन सत्यज्ञानादिवाक्यमुपस्थाप्यते।

श्रुतिप्रापितेषु गुणेषु केषुचित् सार्थक्यम्, केषु चित्तु वैयर्थ्यमिति शङ्काया अकस्मात् गुणाविवक्षादीनां पूर्वसूत्रेष्वसूत्रणे कथमुत्थितिरपि समुदेति? अतः ब्रह्म सगुणम्, प्रकाशवत्, उपासनार्थतया तु गुणानां सार्थक्यमित्येवात्र सूत्रार्थो वर्णनीयः। यथाच वियद्व्याप्यावतिष्ठमानः प्रकाशः अङ्गल्याद्युपाधियोगे-नार्जवादिकं प्राप्यति, विषयविशेषाणां सूक्ष्माणां ग्रहणार्थतया कल्पितव-क्रादिरूपोऽपि सप्रयोजनः, एवमत्रापीति तु भगवत्पादाभिमतोऽर्थः। एवं चावैयर्थ्यं एव वस्तुगत्या प्रकाशदृष्टान्ततात्पर्यं पर्यवस्यतीति न दोषः।

सत्यकामत्वादिकल्पितत्वेन सगुणवाक्यसार्थक्योपपत्तिः।

एतेन—प्रकाशस्यावैयर्थ्ये दृष्टान्ततयाऽन्वयः सूत्रवाक्यात् स्वरसतः प्रतीयते, परैस्तु—औपाधिकाकारायोगे दृष्टान्ततया योजनात् स्वरससिद्धार्थ-त्याग इति व्याससिद्धान्तमार्तण्डोक्तिरपि—व्याख्याता। यतो वयमपि वस्तुग-त्याऽवैयर्थ्यं एव प्रकाशदृष्टान्ततामभिमेमः। द्वारं तु केवलमौपाधिकाकारा-योगः। सूत्रकारा हि चैतन्यमात्ररूपत्वस्य सत्यकामत्वादिभिर्वस्तुगत्या विरोधमेव मन्यन्ते, नाविरोधम्। व्यवहारदृष्ट्या तु अविरोधं मन्यन्त इति त्वन्यदेतत्।

अत एव—"एवमप्युपन्यासादविरोधं बादरायण" इति सूत्रेऽपिशब्द-स्वारस्यम् । अत्र हि सूत्रे विरोधेऽप्यविरोधो हि सूच्यमाणः रूपान्तरेण विरोधः, रूपान्तरेणाविरोध इति कल्पनायामेव स्वरसो भवति । अन्यथाऽविरोधं बादरायण इत्यनेनैव गतार्थत्वात् व्यर्थमेवै "वमपी"तिपदम् । अनेन होदं ज्ञायते—यत् सत्यं ज्ञानादिबोध्यनिर्विशेषप्रकाशस्वरूपत्वं सत्यकामत्वं च विरुद्धमिति, सति चैवं कथं वाऽविरोध साधनात्पूर्वमेव—"प्रकाशवदि"ति सत्य-ज्ञानादिदृष्टान्ततासंभवः ? इदमत्रालोचनीयम्—यत् चतुर्थाध्यायप्रतिपिपाद-यिषितमविरोधं गृहीत्वा किं "प्रकाशवच्चे"ति सूत्रस्य प्रवृत्तिः; उत "प्रकाशवच्चे"ति सूत्रसिद्धमौपाधिकं सत्यकामत्वादिकं गृहीत्वा चतुर्थाध्यायेऽविरोधोपसंहरणमिति । तत्र प्रथमपक्षे विरोधशङ्काया एवानवसरः । नहि उभयलिङ्गत्वं प्रथमं साधितं कल्पितमिति शङ्काया लेशतोऽप्युत्थितिरस्तीति व्यर्थमत्राविरोधसमर्थनम् । द्वितीयपक्षेतु विरोधस्य 'निर्विशेषपारमर्थिकतायां पुरस्फूर्तिकत्वात् व्यवहारदृष्ट्याऽविरोधसमर्थनार्थमेव चतुर्थाध्यायप्रवृत्तिः । "प्रकाशवच्चेति"तु सत्यकामत्वादिकल्पित-व्यवस्थामूरीकृत्य स्वरसत एवोपपद्यते ।

"आह च तन्मात्रमि"ति सूत्रस्वारस्यमद्वैतमत एव ।

यद्यप्येवमप्युपन्यासादिति सूत्राभिमतोऽविरोध एकस्य व्यावहारिकत्वमपरस्य पारमार्थिकत्वमिति कल्पनया सम्भवति, परन्तु सूत्रकाराभिमतं पारमार्थिकत्वं चैतन्यमात्रत्वस्य, व्यावहारिकत्वं तु सत्यकामत्वादेरिति, न केवलं "प्रकाशवचावैयर्थ्यमिति" सूत्रमात्रेणावगम्यते, किन्तु—"आह च तन्मात्रम्" इति सूत्रस्यापि साहाय्येनेति, सूत्रद्वयसिद्धमेवार्थजातं पृथक् पृथक् जैमिन्यौडुलोमिमतत्वेन संगृह्य निष्कृष्यानन्तरमेवै"वमप्युपन्यासादि"-ति सूत्रेण प्रतिपादयतीति सिद्ध्यति । "चितितन्मात्रेणे"इति तन्मात्रपदेन चायमर्थः प्रत्यभिज्ञायते । एवं च—"आह च तन्मात्रमि"ति सूत्रमप्यद्वैतमतमेवानुगृह्णाति । अत्र तन्मात्रपदेन तदितरव्यवच्छेदः प्रतिपाद्यमानस्य गम्यते, तच्च निर्विशेषमात्रप्रतिपादनाविवक्षायामेव स्वरसम्भवति ।

"दर्शयति चाथो अपि स्मर्यते" इति सूत्रार्थविमर्शः

न केवलं सगुणवाक्यशेषा एव निर्गुणबोधकाः, किन्तु स्वतन्त्राण्यपि श्रुति-स्मृति-वाक्यान्यत्र प्रमाणानीति प्रदर्शनार्थम्—"दर्शयति चाथो अपि स्मर्यते" इति सूत्रम्। अनेन हि स्पष्टमिदं प्रतिपाद्यते—यत् प्राकाशदृष्टान्तो ब्रह्मणि गुणानामौपाधिकत्वेन सार्थक्यव्यवस्थापनार्थं एव, यतः सूत्रकारोक्तं निदर्शनमिदं न स्वतन्त्रम्, किन्तु श्रौतमपीति सूत्रयन्ति सूत्रकाराः—"अत एवचोपमा सूर्यकादिवत्" इति। इदं हि सूत्रं सूर्योपमया ब्रह्मणो निर्दोषत्वसमन्वयार्थमिति श्रीभाष्यकाराः। अद्वैतिनस्तु सगुणत्वस्यौपाधिकत्वसमन्वयार्थमिति मतद्वयार्थनिष्कर्षः।

"अत एव चोपमा सूर्यकादिवत्" इति सूत्रार्थसमालोचनम्।

इदमत्र श्रीभाष्यम्—"अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् तत्र तत्रावस्थितोऽपि निर्दोष इति। प्रतिबिम्बसूर्यकादयोऽपि तु सदोषा एवेति निर्दोषत्वसाधने न तस्य दृष्टान्तता संभव इति—न सूत्रस्वारस्यम्, यतो ह्युपाधिदोषाः सर्वेऽपि प्रतिबिम्बगता भवन्तीत्यनुभवसिद्धमिदम्। एतेन—घटाकाशादिदृष्टान्तोऽपि श्रीभाष्यगतो—व्याख्यातः। घटाकाशोऽपि हि घटोपहितो घटवदनित्य एव विशिष्टः। अद्वैतमते तु प्रतिबिम्बानामिव ब्रह्मणोऽप्युपाधिगुणैरेव सगुणत्वम्, नतु स्वत इति व्यवस्थापनान्न दृष्टान्तताऽसंभवः। वस्तुतस्तु नात्र-घटाकाशादिदृष्टान्तता; उत्तरसूत्रानुत्थानात्।

"अम्बुवदग्रहणात्तु तथात्वमि"ति सूत्रार्थपरीक्षा।

एतेन—"अम्बुवदग्रहणात्तु न तथात्वमि" ति सूत्रमपि—व्याख्यातम्, इदं हि सूत्रं ब्रह्मणः प्रतिबिम्बत्वाभावादुक्तव्यवस्थानुपपत्तिशङ्कापरमिति मतद्वयसम्मतमिदम्। अत्र च जलबिम्बयोर्व्यवधानमिवोपधिब्रह्मणोर्व्यवधानाभावात् न ब्रह्मणि बिम्बत्वमिति शङ्काहृदयम्। इदमेवात्र पृच्छ्यते—यत् सर्वशरीरकब्रह्मवादे शरीरशरीरिभावप्रयुक्तस्य सदोषत्वस्य प्रतिबिम्बदृष्टान्तेन कथं परिहारसंभव इति ?

"वृद्धिह्रासभाक्त्वमि"ति सूत्रार्थनिष्कर्षः ।

"वृद्धिह्रासभाक्त्वमि"ति सूत्रं तु श्रीभाष्यमतेऽत्यन्तं प्रतिकूलम् । अत्र हि दृष्टान्तदार्ष्टान्तिकभावविवक्षितं सारूप्यं न विम्बप्रतिविम्बभावेन, किन्तु औपाधिकधर्मवत्त्वेनेति स्पष्टं प्रतीयते । श्रीभाष्यमते तु—वृद्धिह्रासादिभाक्त्वं निरस्यते इति सूत्रयोजनमिदं सूत्राक्षरानुगुणम्, नञध्याहारापत्तिश्च । अत्र हि वृद्धिह्रासभाक्त्वं साध्यतया निर्दिश्यमानं निषेध्यतया साध्यमिति कथं सूत्रकारहृदयङ्गमं स्यादिति सर्वे एव समालोचयन्तु ।

तदिदं सिद्धम्—यत्—"एवमप्युपन्यासादि"ति बादरायणसूत्रेणाप्यद्वैतमतस्यैव परिपोषणात् न "प्रकाशवत्" "आह च तन्मात्रमि" त्यादिसूत्राणां श्रीभाष्याभिमतं योजनं संभवद्युक्तिकम् । अद्वैतमते हि अनेकजीववादे यावत्सर्वमुक्ति ईश्वरभाव एव मुक्तिरित्येव सिद्धान्तात् अपहतपाप्मत्वादिकमपि दहरविद्याप्रकरणादाविर्भूतजीवधर्मतया प्रतिपाद्यमानं मुक्तधर्म इति सिद्धान्तलेशसंग्रहादौ व्यक्तम् । एवं च "ब्राह्मेण रूपेणे"त्यादिभिः स्रष्टृत्वादिकं मुक्तानां प्रतिपाद्यत इत्येव तत्त्वम् ।

विनोत्क्रमणं मुक्तिरिति बादरायणमतमिति प्रतिज्ञा ।

"जगद्व्यापारवर्जमि"ति सूत्रादि तु अर्चिरादिमार्गेणोत्क्रान्तिपूर्वकं हिरण्यगर्भलोकं गतानामेव भोगमात्रसाम्यं प्रतिपादयति, नतु विनोत्क्रमणं मुक्तानामपि । अयं भावः—अर्चिरादिनोत्क्रमणेन प्राप्तब्रह्मलोकानां केवलं सत्यकामत्वादिकं जगद्व्यापारवर्जं भवति, नतु चैतन्यात्मत्वमपि । मुक्तानां तूभयमपि भवति । तत्र केवलसत्यकामत्वादिप्राप्तिरेवोत्क्रमणसाध्या, चैतन्यात्मता तु सत्यकामत्वादिविशिष्टा नोत्क्रमणमपेक्षते । "चितितन्मात्रेण तदात्मकत्वादि"त्यौडुलोमिमतं मुक्तौ बादरायणाचार्याणामपि सम्मतमेव । इयान् विशेषः—एवं भावात्" यत् मुक्तावेव चैतन्यात्मकत्वं जीवस्येत्यौडुलोमिमतम्, बादरायणाचार्यमतं तु सार्वदिकमिति । तदिदं सिद्धम्—यत् उत्क्रमणापेक्षश्चितितन्मात्रभाव इत्यौडुलोमिमतम्, बादरायणाचार्यमतं तु विनोत्क्रमणं चितितन्मात्रभाव इति । मतद्वयसंप्रतिपन्नमिदम्—यदुत्क्रमिष्यत एवंभावात्" इति न बादरायणाभि-

मतमिति, काशकृत्स्नमतमेव तु तन्मतमिति च । इदमेवात्रालोचनीयम्—यत् एवंभावः किं बादरायणानभिमतः, उत—उत्क्रमिष्यत इत्यंश इति । चितितन्मात्रभावो ब्रह्मभावो वा बादरायणाचार्याणामप्यभिमत एवेति, मतद्वयाविरुद्धमिदम् । परिशेषात्तूत्क्रमणापेक्षतद्भाव एव बादरायणाचार्यानभिमेत इति पर्यवस्यति । इदमेवाभिप्रेत्य भगवत्पादा वर्णयन्ति - यत् "औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते । तत्र काशकृत्स्नीयमतमेव श्रुत्यनुसारी" ति । काशकृत्स्नमतं तु—अवस्थितिपदस्यार्थभेदकल्पनया भगवत्पादैः श्रीभाष्यकारैश्च स्वस्वमतानुगुणतया व्याख्यातमित्यन्यदेतत् । एतेन— "शांकरभास्करोक्तपक्षद्वयस्यापि "उत्क्रमिष्यत" इत्येकेन सूत्रेण सूचितस्ये"ति श्रुतप्रकाशिकानुवादोऽपि परास्तः । सर्वथा तु न मुक्तिरुत्क्रमणमपेक्षत इत्येव बादरायणाचार्यमतम् । सर्वेषामपि मुक्तिरुत्क्रमणापेक्षैवेति श्रीभाष्यमतं तु विशदं समालोचितमस्माभिरस्मदीयपरिभाषाभूमिकायाम् ।

मुक्तेरुत्क्रमणापेक्षत्वे व्याससिद्धान्तमार्तण्डमतसमीक्षा ।

व्याससिद्धान्तमार्तण्डसमालोचनप्रसङ्गेन तु पुनरपि किञ्चिदत्र वक्तुमभिलषामः । इदमेव व्याससिद्धान्तमार्तण्डकाराणां मुक्तिविषये मतम्—यत् "मुक्तिरुत्क्रमणापेक्षैवेति । प्रकृतिमण्डलोपरि अप्राकृत-परमपदवाच्य-स्थानविशेषावस्थित-परज्योतिःशब्दवाच्य-वासुदेवप्राप्त्यनन्तरभाविनी तत्सायुज्यप्राप्तिरेव मुक्तिरिति भगवतो वेदव्यासस्य सिद्धान्त इति निश्चीयते । मुक्तिरुत्क्रमापेक्षैवेत्यत्र "समानाचासृत्युपक्रमादमृतत्वं चानुपोष्ये"ति सूत्रं च प्रमाणम् । इदं हि सूत्रम्—"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति च वाक्यमधिकृत्य प्रवृत्तमिति तन्मतमद्वैतमतेनाविशिष्टमेव ।

परविद्यानिष्ठस्य "समाना चासृत्युपदेशादि"तिसूत्रेऽपरामर्श इत्यद्वैतमत संग्रह.

इयान् विशेषः—यत् ब्रह्मविद्यानिष्ठोऽत्र प्रतिपाद्यमानोऽपरविद्यानिष्ठ

इत्यद्वैतमतम्, मार्तण्डकारमतं तु परविद्यानिष्ठ इति। कठवल्यां हि "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते। यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्।" इति हृदयादिग्रन्थिरूपाभिमानादिविलयानन्तरमिहैव मुक्तिरित्येवानुशासनमित्युपदेशं समाप्यानन्तरमेव—"शतं चैका चे" ति वाक्यं प्रवृत्तमिति, शतं चैकेति वाक्यं न ब्रह्मभावपरम्, किन्तूपसकफलपरमित्येवाङ्गीकर्तव्यम्।

शतं चैकेति वाक्ये मार्तण्डकारमतं तत्समालोचनं च।

मार्तण्डकारास्तु—"अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इत्यत्र ब्रह्मानुभवस्तन्माहात्म्यकृतं पूर्वोत्तरपापविश्लेषरूपममृतत्वमेव च बोध्यते, नतु मुक्तिरूपममृतत्वम्; तत्तु—"तयोर्ध्वमायन्नमृतत्वमेती" त्यत्रैव बोध्यत इति मन्यन्ते। इदमेवात्र पृच्छामः—यत् प्रथमश्रुतानां "अत्र ब्रह्म समश्नुते" इत्यादीनां ब्रह्मप्राप्तिरूपमुख्यामृतत्वपरत्वमुत्तरत्रैव तु हिरण्यगर्भप्राप्त्यादिगौणामृतत्वं कथं न प्रतिपादयितुं शक्यते? "ब्रह्मविदाप्नोति" इत्यादिवाक्यसमानार्थकस्य 'ब्रह्म समश्नुते" इति वाक्यस्यार्थान्तरवर्णनं हि न न्यायसिद्धमिति तु वयं पश्यामः। अमृतपदमत्रत्यं "शतं चैके" ति वाक्यगतं च भिन्नार्थपरमित्यत्र नास्माकमपि विप्रतिपत्तिः। इदमेवात्रास्माकं मतम्—यत् "अत्र ब्रह्म समश्नुते" इति वाक्यसाहचर्यात् मुख्यं प्रथमवाक्य इति। अत एव "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति वाक्येन नष्टकामानामुत्क्रमणनिषेधपरेणैकवाक्यतापि सिद्धा भवति।

बृहदारण्यककठवल्युभयगतस्य "अथ मर्त्योऽमृतो' भवतीत्यस्य
विनोत्क्रमणं मुक्तिरित्यत्रैवैकवाक्यतासंभवः

"अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति हि वाक्यं कठवल्यामिव बृहदारण्यकेऽपि—"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति। तदप्येष श्लोको भवति—"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति विदुषः प्राणोत्क्रमणनिषेधानन्तरमपि श्रूयते इति, पूर्वोक्तैकवा-

क्यतैव श्रुत्यभिमतेति जानीमः। बृहदारण्यकोपनिषदि हि सकामानां प्राणोत्क्रान्तिरकामानां तदभाव इति वर्णनात्"अत्र ब्रह्म समश्नुते"इत्यस्यानुत्क्रान्तिपक्षविवरणपरतया योजनाच्चेदमपि ज्ञाप्यते—यत् "शतं चैका च हृदयस्य नाड्य" इति प्राणोत्क्रमणपक्ष एव, नतु पक्षान्तर—इति। सति चैवं "शतं चैका" इति वाक्ये "उत्क्रमणे भवन्ती"त्यंशस्यापि सार्थक्यं भवति। अयं हि विषयः "यथाऽहिनिर्ल्वयनी वल्मीके प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृत" इति सनिदर्शनमत्रोपपाद्यत इति, मुख्यं तात्पर्यमत्रावगम्यते। सकामवाक्ये उत्क्रमणावधितया प्रसक्तस्यैवात्राप्युत्क्रान्त्यवधित्वमवगम्यत इति, प्रकरणादेवेदमवगम्यत इति, तस्य शरीरात् प्राणा नोत्क्रामन्तीत्येवार्थः स्पष्टं प्रतीयत इति, नात्र शाखान्तरवचनेनैवार्थनिर्णयः कर्तव्यः। यत्तु शाखान्तरीयं "तस्मात् प्राणा नोत्क्रामन्ती" ति, तत्र परं जीवस्योत्क्रान्त्यवधित्वमप्रसक्तमिति संशयात् निर्णयार्थमुक्तवाक्यापेक्षा वर्तते।

"तस्मात् प्राणा उत्क्रामन्ति" "तस्य प्राणा उत्क्रामन्ती-
त्यनयोः "तस्य प्राणा उत्क्रामन्ति" इत्यस्यैव
प्राबल्येन व्यवस्थापकत्वम्।

अयं भावः—जीवात्मनः परिच्छिन्नस्योत्क्रमणमेवानु प्राणादीनामुत्क्रमणम्, विदुषां तु ज्ञानेन हृदयग्रन्थि-पूर्वोत्तराघादिविनाशेन प्राप्तामृतत्वानामुपाधिकृतपरिच्छेदशून्यानां कथमुत्क्रमणं सम्भवति? सति चैवं बृहदारण्यकषष्ठाध्यायचतुर्थब्राह्मणेनैव प्रश्नोत्तररूपेण प्रवृत्तेन स्पष्टेनात्र व्यवस्था युक्तेति "स्पष्टो ह्येकेषामि"ति सिद्धान्तसूत्रम्,"प्रतिषेधादिति चेन्न,शारीरात्"इति पूर्वपक्षसूत्रमित्यद्वैतिनां विवरणमेव सूत्रारूढम्। अत एव बृहदारण्यकपञ्चमाध्याय द्वितीयब्राह्मणे—यत्रायं पुरुषो म्रियते, उदस्मात् प्राणाः क्रामन्त्याहो ने"त्यार्तभागप्रश्नस्य "नेति होवाच याज्ञवल्क्य"इत्युत्तरमुपपद्यते।

आर्तभागप्रश्नस्याविद्वद्विषयत्वमिति सिद्धान्तमार्तण्डमतम्।

यत्तु व्याससिद्धान्तमार्तण्डे"आर्तभागप्रश्नस्याविद्वद्विषयत्वेनोत्क्रान्तिप्रतिषेधासंभवात् अगत्या जीवेन प्राणानामविश्लेष एवात्रापि प्रतिपाद्यते इत्युच्यते,

इयमत्रैतदभिमतोपपत्तिः—यत् वागादीनामाग्न्यादिषु लयप्रतिपादनानन्तरं कर्मानुगुण्येनैव शरीरान्तरस्वीकारोऽस्य पुरुषस्यात्र प्रतिपाद्यत इति बद्ध एवात्र भवतुमर्हति, नतु विद्वानिति। अत्र हि पुरुषविषयास्त्रयः प्रश्ना ये विद्यन्ते, तत्र "यत्रायं पुरुषो म्रियते, किमेनं न जहाति नामे"ति प्रश्नस्य, "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति...क्वायं तदा पुरुषो भवती"ति प्रश्नस्य चाविद्वद्विषयत्वमुभय सम्मतम्; नामसम्बन्धस्य कर्माधीनजन्मान्तरसम्बन्धस्य च तत्र व्यवस्थापनात्। सति चैवम्—"उदस्मात् प्राणाः क्रामन्ती"ति प्रश्नोऽपि मरणानन्तरं जीव-सम्बद्धा एव प्राणा वर्तन्ते उत नेति बद्धपुरुषविषयक एव स्वीकर्तव्य इति।

आर्तभागप्रश्नस्याविद्वद्विषयत्वायोगः।

इदमस्माकं प्रतिभाति—यत् प्रश्नान्तरप्रक्रममात्रेण न प्रतीयमानस्य वाक्यार्थस्यान्यथा नयनं युक्तम्। वाक्यार्थस्तु प्राणोत्क्रमणोत्तरवाक्यस्य शरीरादुत्क्रान्तिनिषेध एव स्वरसमवगम्यते, यतो"ऽत्रैव समवलीयन्ते" इति प्राणादीनां शरीरस्थान एव लयः प्रतिपादितः। नहि शरीरादुत्क्रमणपक्षे तस्योपपत्तिः संभवति। एतेन—द्वितीयः पुरुषविषयकः प्रश्नोऽपि—व्याख्यातः; तस्यानन्तनामत्ववर्णनादीश्वरभावापन्नो मुक्त इत्यस्यैवार्थस्य पर्यवसानं गम्यते। एतेन– तृतीयप्रश्नोपि—व्याख्यातः। तत्र हि वागादीनां तत्तदभिमानिदेवतासु लयप्रतिपादनेन हि मुक्तात्मस्वरूपविषयक एव प्रश्न इत्येव गम्यते। बद्धानां हि वागादीनां वृत्तिलयमात्रम्, मनसा चाविभाग इति "वाङ्मनसि दर्शनादि"ति प्रतिपादितम्, नतु स्वरूपतो लयः। अत्र तु स्वरूपतो लय इति, कथं बद्धपुरुषविषयकताऽस्य प्रश्नोत्तरसन्दर्भस्य? अत एव—"क्व वाऽयं पुरुषस्तदा भवतीति प्रश्नः सुहृद्भावेनावाङ्मनसगोचरत्वेन समाहितः। उत्तरं चात्र—"यदूचतुः कर्म ह वै तदूचतुः,यत्प्रशशंसतुः कर्म ह वै तत्प्रशशंसतुः" इति प्राणादीनामेव वाङ्मनसगोचरत्वम् नतु, तदुपहितस्येत्येव बोधयति। अतो नायमार्तभागप्रश्नो बद्धपुरुषविषय इति, 'उदस्मादि"ति वाक्ये शरीरस्यैव ग्रहणादस्माच्छब्देना'त्र'शब्देन च विदुषां प्राणोत्क्रमणनिषेधपरत्वमेवोक्तस्य सन्दर्भस्यावगम्यते। सति चैवं विषयव्यवस्थाऽप्यत्र षष्ठाध्यायोक्तैकवाक्यतया

सेत्स्यतीति, नात्रापि न ब्रह्मविद्याप्रकरणम् । अयं भावः—प्रश्नवाक्ये हि—अस्मात्पदेन शरीरस्यैव ग्रहणं योग्यम्, यत उत्क्रमणपदार्थो विश्लेप मात्रम् ; अन्यथा—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामतो"त्यादावपि जीवादुत्क्रमणप्रतिपादनेन विश्लेप एव प्राणानां जीवात् प्रतिपाद्येत । एतेन—"आत्मनः सकाशात् प्राणा नोत्क्रामन्ति,अत्रैवात्मन्येव समवलीयन्ते संश्लिष्यन्तीति तदर्थ"इति मार्तण्डोक्तिरपि—व्याख्याता । 'समवलीयन्ते' पदस्यापि संश्लिष्यन्तीत्यर्थवर्णने हि तद्वैयर्थ्यमेव स्यात्, यत उत्क्रमणनिषेधेन विश्लेपनिषेधेनैवायमर्थो लभ्यते । एवं च मुक्तानामनुत्क्रमणमेव श्रौतमिति तद्व्यवस्थापनार्थम् "प्रतिषेधादिति चेन्न; "स्पष्टो ह्येकेपा"मित्यत्र'स्पष्टो ह्येकेपामि"त्यस्य पृथक्सूत्रत्वमेव युक्तम् ।

अद्वैतमते एकपदास्वारस्यभङ्गः ।

बृहदारण्यकषष्ठाध्यायकाण्वशाखावाक्यानुसारेण सिद्धान्तोऽद्वैतिनाम् ; माध्यन्दिनशाखागतवाक्यानुसारेण तु श्रीभाष्यानुसारिणाम् । अद्वैतिनामार्तभागप्रश्नोत्तरमप्यनुगुणमिति त्वधिका युक्तिरिति वस्तुस्थितिः । एवं "चैके" शब्दस्याद्वैतमतेऽपि पूर्वपक्ष्यभिमतशाखान्तरात् शाखान्तरपरत्वमेव स्वीक्रियत इति, नैकपदास्वारस्यमद्वैतमते । इयान् विशेषः—यत् अद्वैतिभिर्विप्रतिपन्नवाक्यातिरिक्तं शाखान्तरीयं गृहीतम् , श्रीभाष्यकारैः विप्रतिपन्नयोरेवैकतरमिति । अत्र चैकस्य स्पष्टत्वमपरस्यास्पष्टत्वं शाखान्तरीयवाक्यद्वयमध्ये इत्यत्र तु विनिगमनाविरह इति, वाक्यान्तरं शाखान्तरीयमद्वैतिनो मन्यन्ते । एतेन—एकेषामिति सूत्रपदं शाखान्तरस्थवाक्य एव स्वरसम् , नतु तच्छाखान्तर्गतप्रकरणान्तरस्थवाक्ये इति शङ्का परास्ता । अनेन चेदमेव बोध्यते यत् शाखाविशेषीयस्पष्टवाक्यैकवाक्यतयैव निर्णायकत्वौचित्यात् शाखान्तरगतास्पष्टैकवाक्यानुसारेणोत्क्रान्तिनिषेधनिरासो न योग्य इति । वस्तुतस्तु—एकपदं न सर्वत्र सूत्रेषु समानवेदीयशाखान्तरपरमेव ; "कामकारेण चैके" इति हि नैकवेदस्थशाखान्तरवाक्यानुसारेण सिद्धान्तो दृश्यते । वेदान्तरवाक्यमपि प्रकरणान्तरवाक्यमेवेति स्वशाखागतप्रकरणान्तरवाक्यग्रहणमपि तु न दोषाय ।

प्रतिषेधादिति चेन्नेति सूत्रार्थनिष्कर्षः ।

अयमाशयः—"प्रतिषेधात् इति चेन्न शारीरात्" इत्यत्रैकमुत्क्रान्तिप्रतिषेधवाक्यम्, अपरं तदनिषेधवाक्यम्, इत्युभयमत्र निर्दिष्टम्। तत्रैकं शरीराद्युत्क्रान्तिनिषेधपरमपरं शारीरादिति सूत्रयोजनायां नोभयोरपि विप्रतिपत्तिः। नेदमपि पुनर्विप्रतिपन्नम् यदेकशाखागतमत्र स्पष्टमपरशाखागतमस्पष्टमिति सूत्रकारा मन्यन्त इति। इदमेवात्रालोचनीयम्– यदुक्तान्यतरवाक्यमेव किं स्पष्टतया सूत्रकारा मन्यन्ते, उत शाखान्तरगतमिति। वयं तु पश्यामः—काण्वशाखागतस्यापरस्यैव वाक्यस्य स्पष्टताभिप्रायेण सूत्रकारास्तदनुसारेणैव सिद्धान्तमत्र कर्तव्यं मन्यन्ते इति। अत एव—न पूर्वोक्तार्थोपपादकत्वम्, किन्तु स्वसाध्यार्थोपपादकत्वम्। नह्यस्मन्मतेऽपि हिशब्दोऽनुपपादकः। नच शाखान्तरगतमुक्तप्रकरणस्थमपि वाक्यं शारीरात् स्पष्टमुत्क्रमणं निषेधतीति तु भाष्य एव व्यक्तम्। यथाचार्तभागप्रश्नः श्रीभाष्याभिमतरीत्या नाविद्वद्विषयतामर्हति, तथा पूर्वमेवोपक्षिप्तम्। एतेन—"यथोदाहृतार्तभागप्रश्नप्रतिवचने शरीराद्युत्क्रान्तिप्रतिषेधः स्पष्टः, तथा पूर्वोपदर्शितमाध्यन्दिनशाखावाक्ये शारीराद्युत्क्रान्तिप्रतिषेधः स्पष्ट इति शङ्का—परास्ता। शरीरोपादनोत्क्रान्तिरिव शारीरोपादाना सा हि न प्रसिद्धा। अतोऽद्वैतसम्मतमेव विवरणमत्र सांप्रतम्। अत एवाथाकामयमान इति विशेषप्रतिपादनमुपपद्यते। विशेषोऽत्र प्रतिपाद्यः पुनरावृत्त्यभाव एव यदि मन्यते श्रुतप्रकाशिकोक्तरीत्या मार्तण्डोक्तरीत्या वा, तर्हि "न तस्य प्राणा उत्क्रामन्तीति वितथमेव वाक्यम्; "ब्रह्मैव सन् ब्रह्माप्येती"त्यनेनैव निर्वाहात्।

विदुषामुत्क्रान्त्यभावेऽविदुषामेवार्चिरादिगतौ च प्रमाणसंग्रहः।

बृहदारण्यकषष्ठाध्यायचतुर्थब्राह्मणं विद्वदविद्वद्विषयभेदेनोत्क्रान्तौ विशेषमभिधाय,तदेते श्लोका भवन्ती" त्युपक्रम्याऽर्चिरादिमार्गं प्रतिपाद्य "तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जना' इत्यर्चिरादिमार्गपर्यन्तमधिकारिणोऽविद्वांस इति विविच्य "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्"? इत्यादिना ज्ञानिनः कर्तव्यप्राप्या-

एवम्—"अप्रतीकालम्बनान्नयतीति बादरायण" इति सूत्रस्याधिकरणान्तरघट-
कत्वमपि संभवतीति । सति संभवे त्वेकाधिकरणत्वे सर्वेषाम्, नास्माकमपि
विरोधः । पूर्वोक्तरीत्या गत्यन्तरासंभवात्तु विषयभेदादधिकरणभेद एवात्राव-
लम्बनीयः । एतेन—"अप्रतीकालम्बनान्नयतीति बादरायणस्तत्क्रतुश्चे"ति सूत्रे
तत्क्रतुपदमपि सार्थकं—व्याख्यातम् । श्रीभाष्यमते यत्रानेन सूत्रेण परमात्म-
शरीर-प्रकृतिवियुक्त-प्रत्यगात्मोपासकानामप्यप्रतीकालम्बनपदेन ग्रहणम्, तत्र
प्रत्यगात्मनामुपास्यानां "स एनान् ब्रह्म गमयती"त्यत्र प्राप्यब्रह्मपदार्थत्वाभावान्न
तत्पदस्वारस्यं संभवति । इयमत्र वेदान्तपरिभाषाभूमिका........

एतेन—चतुर्थाध्यायस्य तृतीयपादोऽपि व्याख्यातः । तत्र भाष्यत्रय-
स्याप्यर्चिरादिमार्गस्वरूपनिर्णये न वैषम्यं वर्तते । केवलम्—"अप्रतीकालम्बना-
न्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्चे"ति सूत्रविवरणे परं मत-
त्रयेऽपि विशेषो वर्तते । इदं हि सूत्रं श्रीभाष्यकाराः "कार्यं बादरिरस्य गत्यु-
पपत्तेः" "परं जैमिनिर्मुख्यत्वात्" इति सूत्रद्वयेन कार्योपासकानामर्चिरादि-
मार्गेण नयनमथवा परोपासकानामिति मतद्वय उपक्षिप्ते बादरायणाचार्यः प्रती-
कालम्बनव्यतिरिक्तान् परं ब्रह्मोपासीनान् आत्मानं च प्रकृतिवियुक्तमुपासीनान्
नयतीति मन्यन्त इति व्याचक्षते ।

अत्र श्रीभाष्यमते पूर्वतनसूत्रद्वये बादरिजैमिनिग्रहणमत्र बादरायण-
ग्रहणं च पूर्वयोर्द्वयोः पूर्वपक्षसूत्रत्वं कथं सूचयतीव, परंतु - इदमेवात्रालोचनी-
यम् - यत् "आतिवाहिकास्तल्लिङ्गादि"त्यनेन नेतृनिर्णयानन्तरं प्राप्यस्वरूपम्—
"स एनान् ब्रह्म गमयती"ति वाक्येन गम्यमानमेव खलु कार्यं परं वेति, केव-
लद्वितीयान्तपदप्रयोगेण गम्यते, नतु प्राप्यं कर्म ; अन्यथोपासीनानिति पदा-
ध्याहारदोषः कथं परिहरणीयः ? अत एव "गत्युपपत्ते"रिति निर्देश उपपद्यते ।
श्रीभाष्यमते हि यत्र कार्योपासकानां परोपासकानामुभयेषां गतिर्वर्ण्यते —

व्याख्यातम्। इदमेवात्र पृच्छ्यते—यत् 'परं जैमिनिर्मुख्यत्वादि'ति सूत्रविवरणावसरगतेन—'नच गमनानुपपत्तिः प्रमाणम्, परस्य ब्रह्मणः सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिश्शास्त्रादि'ति "प्रतिषेधादिति चेदि"ति सूत्रानुसारिणा भाष्येण कथं न विरोध इति।

अत्र सत्यं पूर्वतनभाष्यं बादरिमतेन, इदं तु जैमिनिमतेनेति विरोधपरिहार इत्युत्तरस्यास्त्यवकाशः, तथाप्ययमेव पूर्वतनस्य प्रश्नस्याशयः—यत् पूर्वतनपादे 'प्रतिषेधादिति चेन्ने'ति सूत्रेण विदुषोऽपि गतिसाधनानन्तरं मुख्यत्वहेतुकस्य जैमिनिमतस्योत्थितिरेव कथमिति। तथाचोक्तमतद्वयमप्यत्र सूत्रकारैर्गतिविषये मतभेदोऽस्तीति निरूपणार्थमेवेति खलु वक्तव्यम्। इदं च पूर्वतनपाद एव सङ्गतम्, नात्र। अत्र हि नेता नेतव्यः प्राप्यं त्रितयमपि खलु निरूपणीयम्, श्रीभाष्यमते तु नेता नेतव्याश्च निरूप्यन्ते, न प्राप्यम्। एतेन 'सामीप्यात्तु तद्व्यपदेशः' 'कार्यात्यये तदध्यक्षेण सहातः परमभिध्यानादि'ति सूत्रद्वयमपि—व्याख्यातम्। सर्वविदितमिदं तत् श्रीभाष्यकाराः—अस्मिन् सूत्रद्वयेऽपि प्रथमतः प्राप्यं कार्यब्रह्म, अनन्तरं तु परं ब्रह्मेति विवृण्वते इति।

तदत्र यदि श्रीभाष्यकाररीत्या नेतव्यनिरूपणमेव प्रसक्तम्, न प्राप्यनिरूपणम्, तदा को वाऽस्य विचारस्य प्रसङ्गः? एवं कार्योपासकानामपि हिरण्यगर्भप्राप्तिद्वारा परब्रह्मप्राप्तेरेव बादरिमतत्वमिति श्रीभाष्यविवरणे—'स एनान् ब्रह्म गमयती'त्यत्र ब्रह्मपदस्य हिरण्यगर्भपरत्वमिति यदुच्यते, तदिदं जैमिनिमतसाधारणमपीति वक्तव्यम्; यतः सर्वेषामुपासकानां ब्रह्मलोकगमनपूर्वकमेव परप्राप्तिस्तैस्स्वीकरणीया।

तत्र च बादरिमतेऽपि परस्यापि ब्रह्मणः प्राप्यत्वं विवक्षितमेव। इयान् विशेषः—न साक्षात् स्वयं कार्योपासकानां परप्राप्तिः, किन्तु हिरण्यगर्भेण साकमिति बादरिमतम्, जैमिनिमतं तु विना हिरण्यगर्भापेक्षां स्वत एव परप्राप्तिरित्येव वक्तव्यम्। सर्वथा तु बादरिमतेऽपि परस्य प्राप्यत्वं संमतमेवेति कथं बादरिमतनिरूपणावसरे परस्यागन्तव्यत्वविवरणं श्रीभाष्यकाराणामुपपद्यते।

एतावता विवक्षितः सारांशोऽयमेव। यत् गत्युपपत्तेर्मतद्वयसाधारण्यात् 'कार्यं बादरिरस्य गत्युपपत्तेरि'ति सूत्रे गत्युपपत्तेः कार्योपासकमात्रनेयत्वे कथं हेतुत्वमिति शङ्का परिहरणीया श्रीभाष्यमते भवति। अतः सूत्रद्वयेनापि 'स एनान् ब्रह्म गमयती'त्यत्र ब्रह्मपदार्थविचार इत्येव सूत्राशयानुगुणं विवरणम्। तत्र च 'गत्युपपत्ते'रिति बादरिमते, जैमिनिमते च 'मुख्यत्वात्' इति हेतुद्वयेन किं वाऽत्र सूत्रकारैः सिद्धान्ततयाभिमतमिति विचारे—'स एनान् ब्रह्म गमयती'ति वाक्ये ब्रह्मपदस्य गमयतिपदसमभिव्याहृतस्य गत्युपपत्तिर्यत्र भवति तत्परत्वमेव युक्तम्। अत एव गतिमार्गपादेऽस्य वाक्यस्य विचारोऽप्युपपद्यत इत्यादिभावं मनसि निधाय प्राप्यवस्तुनिरूपणपरतया यत् भगवत्पादानां विवरणम्, तदेवात्रापि सूत्रकारहृदयङ्गममिति प्रतिभाति।

एवं चा'प्रतीकालम्बनान्नयती'त्यस्य अप्रतीकालम्बनानिति द्वितीयाबहुवचनान्तपदघटितस्य—'स एनान् ब्रह्म गमयती'त्यत्रत्यैनान्पदार्थनिर्णायकतयाऽधिकरणान्तरपरत्वमेव स्वरसमवगम्यत इति,—'कार्यं बादरि'रित्यादिसूत्रघटिताधिकरणे सिद्धान्तसूत्रपरतया योजनं श्रीभाष्यकाराणां नोपपन्नमिति प्रतिभाति। एवंच—'प्रतिषेधादिति चेन्ने'ति सूत्रेण विदुषोऽनुत्क्रमणव्यवस्थापनमेव बादरिमतादौ गत्युपपत्तेर्हेतुत्वादिनिर्देशेनापि गम्यत इति, विदुषोऽप्युत्क्रमणादिव्यवस्थापनं श्रीभाष्यकाराणां चिन्त्योपपत्तिकमेव॥

संप्रसादवाक्ये शरीरादुत्थानं नोत्क्रमणमिति व्यवस्था।

एतेन—''एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यमपि—व्याख्यातम्। अत्र शरीरात् समुत्थानं नाम स्थूल-सूक्ष्मशरीरद्वयसम्बन्धविच्छित्तिरेव स्वरूपसाक्षात्कारनिबन्धना विवक्ष्यते, नतु स्थूलशरीरादुत्क्रमणम्; अन्यथाऽविदुषां सकामानामपि शरीरादुत्क्रमणेन स्वरूपाविर्भावापत्तिः।

स्वरूपाविर्भावस्यावरणनिवृत्तिरूपत्वविचारः।

पूर्वसिद्धस्य स्वरूपस्य तु कोऽयमिदानीमाविर्भावो नामेति चेत्तिरोधाननिवृत्तिरेवेति वदन्तो मार्तण्डकारा अपि मुक्तेष्वनुत्क्रान्तिनिवृत्तिमेव मन्यन्ते इति

समानम्। इदमेवात्रालोचनीयम्—किन्निमित्तेयमावरणनिवृत्तिरिति। वयं तु मन्यामहे-स्वरूपसाक्षात्कारनिबन्धनैव स्वरूपतिरोधाननिवृत्तिर्न तु निमित्तान्तराधीनेति, 'शरीरात्समुत्थाये'त्यनेन शरीरविविक्ततया स्वरूपानावरणमेव विवक्ष्यत इति। एतेन—परंज्योतिःपदार्थोऽपि व्याख्यातः। विकलितान्तःकरणाद्युपाधिकप्रत्यगात्मन एवात्र परंज्योतिःपदार्थत्वात्। एतेन—शरीरादुत्थानं नाम शरीरादात्मनो विवेचनमित्यर्थवर्णनं पुनरनुपादेयम्; अशब्दलभ्यत्वात् तस्यार्थस्येति मार्ताण्डोक्तिरपि—व्याख्याता। "यावन्न विमोक्ष्येऽथ संपत्स्ये" इति शरीरविमोक्ष एव हि संपत्तिरिति स्पष्टमेवोक्तम्। तत्राप्यर्चिरादिगतिकल्पना तु स्वकपोलकल्पनैव न श्रुत्यनुसारिणी।

परब्रह्मप्राप्तौ गत्यनपेक्षायां "परंजैमिनिरि"ति सूत्रगतमुख्यत्व-
हेतुस्वारस्यम्।

परब्रह्मप्राप्तिर्हि गतिमनपेक्ष्यैव भवतीति "परं जैमिनिर्मुख्यत्वादि"-त्यत्र मुख्यत्वहेतुमात्रनिर्देशेन ज्ञायते। अत्र 'कार्यं बादरिरस्य गत्युपपत्तेः' इत्यत्र गत्युपपत्तिहेतुनिर्देशेन हि गतिवाक्येषु सर्वेषु कार्यं ब्रह्मैव विवक्ष्यत इति गम्यते इति, मुख्यत्वेऽपि ब्रह्मणो नात्र विवक्षेति सूत्राशयोऽवगम्यत इति, बादरिमतमेव बादरायणमतमिति विजानीमः।

बादरिपक्षस्य पूर्वपक्षत्वमिति मार्ताण्डकारव्यवस्थानुवादः।

एतेन—बादरिपक्षस्य पूर्वपक्षत्वम्, जैमिनिपक्षस्योत्तरपक्षत्वं च सूत्रस्वरससिद्धम्, यदि बादरिपक्षीयपञ्चसूत्र्यां जैमिनिपक्षप्रतिक्षेपपरं किञ्चित् सूत्रं स्यात्, तदा हि बादरिपक्षस्योत्तरपक्षत्वं स्यात्। न चैवं दृश्यते। प्रत्युत बादरिपक्षप्रतिक्षेपपराण्येव सर्वाणि जैमिनिपक्षीयसूत्राणि दृश्यन्ते। तद्यथा—'परं जैमिनिर्मुख्यत्वात्' इति सूत्रेण 'सामीप्यात्तु तद्व्यपदेशः' इति सूत्रार्थः प्रतिक्षिप्यते। 'दर्शनाच्च' इत्यनेन 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' इति सूत्रार्थः प्रत्याख्यायते। 'नच कार्ये प्रत्यभिसन्धिः' इति सूत्रेण 'विशेषितत्वाच्च' इति सूत्रार्थो निरस्यते। जैमिनिमतमनुपपत्तिदोषदुष्टतया, मुख्यत्वेऽपि ब्रह्मणो न संभवतीति शङ्का तु न युक्ता, जैमिनिर्हि

मुख्यार्थसंभवं मत्वैव 'मुख्यत्वादि'ति प्रयुक्तवानिति वक्तव्यम् । अतो गत्युपपत्तिरपि जैमिन्यभिमतेति कल्प्यत इत्यादिमार्तण्डोक्तिरपि—व्याख्याता ।

बादरिपक्षस्यैव सिद्धान्त-पक्षत्वमिति, सिद्धान्तमार्तण्ड-
समालोचनपूर्विका व्यवस्था ।

इदं हि मतद्वयसंप्रतिपन्नम्—यत् जैमिनि-बादरिपक्षीयसूत्राणां प्रतिक्षेप्यप्रतिक्षेपकभाव इति । इदमेवात्रालोचनीयम्—किमन्वारुह्य बादरिणैव जैमिनिमतं प्रतिक्षिप्यते, उत बादरिमतं प्राग्नं जैमिनिः प्रत्याचष्ट इति । वयं तु विश्वसिमः—यत् बादरिरेव जैमिनिमतमन्वारुह्य प्रत्याख्यातीति सूत्रकारा मन्यन्त इति । अत एव गत्यनुपपत्तिमात्रं न परिहृतं सूत्रकारैः । 'सामीप्यात्तु तद्व्यपदेश'' इति सूत्रं हि—'परं जैमिनिर्मुख्यत्वादि'ति शङ्कानिरासार्थमिति युक्तम् । अत्र हि लक्षणया ब्रह्मपदस्य चतुर्मुखपरत्वं साध्यते, लक्षणा च मुख्यार्थासंभवप्रतिसन्धानानन्तरमेवात्मानं लभते इति, मुख्यार्थविवक्षां जैमिन्यभिमतां गत्यनुपपत्त्याऽनुपपन्नां मत्वैव "सामीप्यात्तु तद्व्यपदेश" इति सूत्रं प्रवृत्तमिति विज्ञायते । एतेन—"दर्शनाच्चे"ति सूत्रमपि पूर्वपक्षसूत्रमिति—व्याख्यातम् । न हि अमृतत्वश्रवणं कथमिति शङ्कां विना "कार्यात्यये तदध्यक्षेणे"त्यस्य स्वरसप्रवृत्तिः संभवति । अत्र च "स्मृतेश्चे"ति स्मृतेरप्युपष्टम्भोऽत्रेति वर्णनेन हि विशदं सूत्रकाराः 'कार्यात्ययेने'त्येवं सिद्धान्तपक्षं मन्यन्ते । अनेन हि—गतिपूर्वकममृतत्वाम्नानस्थले सर्वत्र हिरण्यगर्भप्राप्तिरेव साक्षाद्विवक्षितेति गम्यते । श्रुतिद्वयविरोधे हि क्रमविशेषमात्रस्यैकत्र कल्पनेन वियदधिकरणन्यायेन तत्परिहार एव युक्त इति तु हृदयम् । एतेन—"न च कार्ये प्रत्यभिसन्धिः"इति सूत्रमपि पूर्वपक्षसूत्रमेवेति—व्याख्यातम् । इयं हि शङ्का—'नास्ति वचनस्यातिभार'' इति न्यायेन परिहरणीयेति,—"ब्रह्मलोकान् गमयति'' इति बहुवचनघटितब्रह्मलोकपदान्यथानुपपत्त्या कार्यब्रह्मगतिरेवात्र विवक्षणीयेति सूत्रकाराः सूचयन्तीति, जैमिनिमतनिरासार्थान्येव सर्वाणि बादरिगुणसूत्राणि । जैमिनिमते त्रीण्येव सूत्राणि, बादरिमते तु पञ्च सूत्राणीति प्रथमसूत्रांशस्य जैमिनिपक्षीयसूत्रैः कैरप्यप्रत्याख्यानात् सर्वेषां च जैमिनिपक्षीयसूत्रार्थानां पृथक् पृथक् सू-

त्रेण बादरिपक्षीयेण निरासाच्च कथं सूत्रकारा जैमिनिपक्षमेव पूर्वपक्षं निरस्यं वा न मन्यन्त इति सर्व एव समालोचयन्तु। एतेन—यदि बादरिपक्षीयपञ्चसूत्र्यां जैमिनिपक्षप्रतिक्षेपपरं किंचित्सूत्रं दृश्येत, तदा हि बादरिपक्षस्योत्तरपक्षत्वं स्यादिति शङ्कापि मार्तण्डकाराणाम्—परिहृता।

प्रजापतिसंवादादिना मुक्तेर्गतिसापेक्षत्वशङ्कापरिहारः।

या तु "ब्रह्मलोकान्" इत्यादौ पाशाधिकरणन्यायेन निपादस्थपत्यधिकरणन्यायेन च परस्यैव ब्रह्मणो विवक्षा, यच्च "तद् ब्रह्म तदमृतं स आत्मा" इति परमात्मस्वरूपनिरूपणानन्तरं 'प्रजापतेर्वेश्म प्रपद्ये यशोऽहं भवामी' त्यादिना प्रजापतिसभाप्रवेशादिकमुपक्षिप्तम्, तदिदम् परमात्मोपदेशप्रकरणस्य 'स आत्मे'त्यत्रैव पर्यवसानात्, मुक्तानामीश्वरादितादात्म्योपदेशपरत्वाच्च न गतिनिरूपणमित्यादि भाष्य एव व्यक्तम्। प्रजापतिशब्देन ह्यत्रत्येन नोपदिष्टं ब्रह्म परामृश्यते, अन्यथा यश आदिशब्दानामपि ब्रह्मप्राप्तिपरत्वापत्तेरित्याद्यन्यत्र विस्तृतम्। सर्वथा तु न परब्रह्मप्राप्तिर्गतिमपेक्षत इत्येव सूत्रकारहृदयम्।

मुक्तेर्गतिनिरपेक्षत्वे 'सांपराये तर्तव्याभावादि'ति सूत्रोपष्टम्भः।

अत एव 'सांपराये तर्तव्याभावात्तथाह्यन्ये' इत्यत्र देहवियोगकाल एव कर्मोपक्षयः प्रतिपादित उपपद्यते; अन्यथा कर्माधीनत्वादुत्क्रमणस्य मध्यतनव्यवहाराणां च, तद्विरोधः स्यात्। सति चैवमिदं फलति—यत् क्वचिदेव गतिः क्वचिन्नेति। सर्वथा तु गतिसार्थक्यं तु सिद्धमेव। अन्यथा सर्वेषां गतिस्वीकारे हि विदुषामुत्क्रमणनिषेधो बाधितः स्यात्।

गतेरर्थवत्त्वमिति गुणोपसंहारपादसूत्रस्य मुक्तौ गत्युपयोगपरतया

श्रीभाष्यकारादिविवरणसमालोचनम्।

श्रीभाष्यकारास्तु 'गतेरर्थवत्त्वमि'ति सूत्रं पूर्वपक्षपरं मन्यन्ते। परन्तु नास्य पूर्वपक्षस्योत्थितिरेव संभवति। यतः प्राप्तव्याभावेन कर्मोपक्षयः खलु 'सांपराये तर्तव्याभावादि'त्यनेन प्रतिपादितः। अनेन हि विदुषां न प्राप्यमन्यदस्तीति सूचनेन गतिनिषेधो हि स्पष्टमेव कृत इति, गतिवाक्यसार्थक्यं कथमिति

शङ्कैव तत्र समुन्मिषति। सा च क्वचिद्गतिः क्वचिन्नेति विभागेनैव परिहर्तव्या। तत्र च विदुषां गतिनिषेधादविरुद्धविषया गतिरिति सूत्रतात्पर्यमनपोह्यं सिद्ध्यति। ततश्च गतेरर्थवत्त्वमिति सिद्धान्तसूत्रमेव, येनाधिकरणान्तरोपक्रमः।

"उपपन्नस्तल्लक्षणार्थोपलब्धेरि"ति सूत्रस्याद्वैतमतानुगुणत्वम्।

एतेन—'उपपन्नस्तल्लक्षणार्थोपलब्धेः' इति सगुणविद्यायामेव गतिसूचकपर्यङ्कारोहणादीनामुपलब्धिरिति निरूपणपरं सूत्रमपि व्याख्यातम्। श्रीभाष्यकारा अनेन सूत्रेण विदुषां दग्धकर्मणामपि सूक्ष्मशरीरस्य सत्त्वाद्गतिरुपपन्नेति, न तदर्थं कर्मोपक्षयोऽध्वनि कल्पनीय इति विवृण्वते। तच्छब्दस्याकर्मकृतत्वमिति, लक्षणशब्दस्य च स्वरूपमित्यर्थस्वीकारेण विदुषामपि अप्राकृतविग्रहस्य शास्त्रेषु दृश्यमानत्वात् न कर्मक्षयो मरणकाल एवानुपपन्न इति तदाशयः। अत्र तच्छब्दस्य प्रक्रान्तिगतिपरामर्शित्वं परित्यज्याप्राकृतेत्यर्थवर्णनमेकमस्वारस्यम्, द्वितीयं तु 'गतेरर्थवत्त्वमि'त्यत्र पूर्वपक्षचिह्नाद्यभावेऽपि तत्परत्वाश्रयणमिति द्वितीयम्, तृतीयं तूपपन्नशब्देन पूर्वोक्तार्थोपपादनमात्रस्य ज्ञातस्य परित्यागेन तद्विरुद्धार्थान्तरप्रतिज्ञापरतया योजनमिति सूत्रकारा न श्रीभाष्याभिमतं योजनं साधु मन्यन्ते। वस्तुतस्तु विदुषां सूक्ष्मशरीरसत्त्वे न किमपि प्रमाणम्, येनोत्क्रमणं साधु स्यात्; अन्यथा तर्त्व्याभावप्रतिपादनं कथमुपपद्यते? 'समाना चासृत्युपदेशादि'ति त्वविरुद्धविषयमिति पूर्वमेवोक्तम्। 'तन्वभावे सन्ध्यवदुपपत्तेः'—'भावे जाग्रद्वत्' इति शरीरेन्द्रियाणां स्वसृष्टानामीश्वरसृष्टानां वा साहाय्येनानुभवितृत्वं मुक्तानामित्यवगमात् विद्यामाहात्म्येन सूक्ष्मशरीरसम्बन्धमात्रमवाधितमेव वर्तत इति वादोपि श्रीभाष्याद्यभिमतोऽनुपपन्न एव। सर्वथा तु विदुषां गतिनिषेध एव सूत्रकाराभिमत इति।

बादरायणाभिमतमुक्तिस्वरूपनिष्कर्षः।

एतेन—मुक्तिस्वरूपमपि—व्याख्यातम्। सूत्रकारा हि 'ब्राह्मेण' 'चितितन्मात्रेण' 'एवमप्युपन्यासादि'ति मुक्तस्वरूपं सत्यकामत्वादिमदीश्वरस्वरूपम्, ईश्वरस्वरूपत्वेऽपि चिन्मात्ररूपत्वमपि तस्य तु वर्तत एवेति सूचयन्ति। सत्यं केवलचैतन्यरूपत्वं सत्यकामत्वादिविशिष्टत्वं च विरुद्धमेव। सर्वमुक्तौ

चैतन्यमात्ररूपत्वम्, यावत्सर्वमुक्ति तु ईश्वरभाव इति तु न दोषः। अत्र केवल चैतन्यमात्ररूपत्ववर्णनेन ब्रह्मणो ज्ञानरूपत्वमेव मुक्तस्यापि जीवस्य, नतु ज्ञानाश्रयत्वं धर्मभूतज्ञानाश्रयत्वं वेति सूत्रकाराः सूचयन्तीति, नाहंपदार्थो मुख्यो जीव इत्यपि सूच्यते। सति चैव 'मविभागेन दृष्टत्वात्' इति सूत्रमपि मुक्तस्येश्वरेण ब्रह्मणा वाऽत्यन्ताभेद एव, नतु शरीरशरीरिभावेन तादात्म्यमिति सूचयति।

'सोऽश्नुते सर्वान् कामानि'ति वाक्यस्य ब्रह्मभावमुक्तित्वतात्पर्यम्।

'सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिते' ति वाक्यं हि सर्वज्ञ ब्रह्मतादात्म्यापन्नस्सन् सर्वानानन्दाननुभवतीत्येवमर्थपरमेव युक्तम्। एतेन—अविभागस्याभेदरूपत्वे 'सोऽश्नुते सर्वान् कामान् सह' इति मुक्तसाहित्यश्रवणात्तद्विरोधापत्तिरि' ति शङ्कापि—पराहता। यतः तैत्तरीयोपनिषत् ब्रह्मण एवात्मत्वमभिप्रेत्यैव 'तस्माद्वा एतस्मादात्मनः' इति आत्मपदादिना ब्रह्मस्वरूपं परामृशति। ततोऽन्तरस्ततोऽन्तर इत्यानन्दमयपर्यन्तमुपदिश्य ब्रह्मण एव तत्पुच्छत्वेन निरूपणेन हि तैत्तरीयोपनिषत् जीवशरीरकं परमात्मानं नोपदिशतीति विशदमिदं ज्ञायते। जीवमकृत्योः खलु आनन्दमयाख्यभवदभिमतपरमात्मावयवतया तत्र निरूपणमपेक्षितम्, नतु ब्रह्मण एव। अनेन हीदं ज्ञायते—यत् परमात्मत्वेऽप्यानन्दमयस्य न शरीरित्वं तस्य भवितुं युक्तमिति। वस्तुतस्तु आनन्दमयपदं नात्र ब्रह्मणो बोधकम्, किन्तु जीवस्यैव। सर्वं चात्र वक्तव्यं पाराशर्यविजयसमालोचनपूर्वकमस्मदीय-निर्णयसागरमुद्रापित-शाङ्करभाष्यभूमिकायां विवेचितमेव।

'आनन्दमयोऽभ्यासादि'ति सूत्रस्य मार्ताण्डकाराभिमता योजना।

यत्तु—'आनन्दमयोऽभ्यासादि'त सूत्रमानन्दमयब्रह्मतायामेव स्वरसम्, न तु तज्जीवतायाम्। इयमत्र सूत्रयोजना, 'भेदव्यपदेशाचान्यः' इति सूत्रादन्यपदमाकृष्य 'आनन्दमयः, जीवातिरिक्तः, जीवानन्दयि-शतगुणोत्तराभ्यस्यमानानन्दवत्त्वात्, इति केचन—मन्यते।

आनन्दमयब्रह्मतायां सनाधिकदूषणोपन्यासः।

तत्राभ्यासशब्दस्याभ्यस्यमानानन्दवत्वे लक्षणापत्तिरेको दोषः। 'सैषा

ऽऽनन्दस्य मीमांसा भवती'ति ब्रह्मण एवानन्दरूपस्य वाङ्मनसापरिच्छे-द्यत्वेन 'रसो वै स' इत्यादिना प्रस्तुतस्यानन्दमयातिरिक्तस्यानन्दवत्त्वनिषे-धेनानन्दस्वरूपमात्रत्वस्योपपादनार्थमेवोक्तसन्दर्भस्य प्रवृत्तत्वात् हेत्वसिद्धिरपरो दोषः। 'ईक्षतेर्नाशब्दमि'त्यत्रनिषेधशब्दपुरस्सारेणाप्रवृत्तत्वादेनेन पदविशे-षेण ब्रह्मस्वरूपविवक्षाया एव साध्यत्वप्रतीत्या, अभ्यासपदस्य तात्पर्यग्राहक-लिङ्गपरस्यार्थविशेषपरतया व्यासस्यार्थान्तरभेदाव्यासनया च न सूत्रकाराणा-मुक्तार्थतात्पर्यमिति तृतीयं दूषणम्। 'स एको ब्रह्मण आनन्द' इत्यन्ततया प्रतिपादितस्य चतुर्मुखब्रह्मणोपि शतगुणोत्तरक्रमेणाभ्यास्यमानानन्दवत्वात् व्य-भिचारो विरोधश्चेति चतुर्थं दूषणम्। यदि तु शतगुणोत्तरक्रमेणाभ्यासपुरस्सरा-वाङ्मनसगोचरत्वाभिधानादिति विवक्ष्यते, तदानीं न केवलं सूत्रार्थत्यागः, किन्तु अवाङ्मनसगोचरत्वात् इत्यनेनैव निर्वाहेण व्यर्थविशेषणत्वमिति पञ्चमं दूषणम्। अनन्यपरपुनःश्रवणस्यैवाभ्यासत्वात् मानुषानन्दवाक्यानामानन्दमया-परत्वात्, 'यतो वाचो निवर्तन्ते'इति च वाक्यस्य 'आनन्दमानन्दमयस्य विद्वानि'-ति वक्तव्ये 'आनन्दं ब्रह्मणो विद्वानि'त्येव श्रवणेन तस्य पुच्छब्रह्मविषयकत्वस्यैव स्वरसमवगमेन चानन्दमयेऽभ्यासलेशस्याप्यसंभव इति, षष्ठं दूषणम्। एतेन— 'आनन्दमयपदोत्तरमभ्यासपदं प्रयुञ्जानः सूत्रकार आनन्दमयस्य ब्रह्मत्वमभि-प्रैती'ति, विपरीतोक्तिरिति—सूचितम्।

आनन्दमयजीवत्वे उपपत्तयः

आनन्दमयः, जीवः, प्रियाद्यवयववत्वात्, आनन्दमयो ब्रह्मातिरिक्तः, ब्रह्मपुच्छकत्वात्, न हि पुच्छमेव पुच्छि भवितुमर्हति, इति सत्प्रतिपक्षानुमा-नमिति सप्तमं दूषणम्। अन्यान्यपि दूषणानि बहूनि ब्रह्मसूत्रभाष्यभूमिकाया-मस्माभिरुल्लिखितानि तत एवावगन्तव्यानि। नहि विकारार्थकमयडन्तपर्यायगत-मानन्दमयपदमविकारं ब्रह्म बोधयितुं शक्नोतीति,नानन्दमयोऽत्र ब्रह्मेति युक्तम्। 'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती'ति आनन्दप्राप्त्याऽऽनन्दमयो भव-तीति निरूपणात्मकृतसन्दर्भोऽपि आनन्दप्राप्तिनिमित्तमानन्दित्वम्, नतु तद्धर्मि-त्वेनेति निरूपणेन, ब्रह्मैवानन्दरूपो नत्वानन्दमय इति गमयति। न हि ब्रह्मैव

पुच्छ ब्रह्मवादे सिद्धान्तमार्ताण्डापादितदूषणपरिहारः ।

यत्तु पुच्छब्रह्मवादे – आनन्दमय इति श्रुतस्य धर्मिणो हानम्, अश्रुतस्य धर्मिणः कल्पनम्, पूर्वोत्तराधिकरणेष्वनुवृत्तस्य प्रधानजीववैलक्षण्यरूपस्य साध्यस्य हानम्, तेष्वदृष्टस्य साध्यस्य कल्पनमिति दूषणोपक्षेपणम्, तत्र पूर्वोक्तरीत्याऽऽनन्दमयपदस्य तदीयपर्यायपरत्वात् न प्रथमद्वितीयदोषयोरवसरः। पुच्छब्रह्मण एव प्राधान्येन प्रतिपादनम्, नानन्दमयस्य जीवस्य, कामादिश्रुतेर्नवा प्रधानस्येत्येव पुच्छब्रह्मवादेऽपि स्वीकारेण पूर्वोत्तराधिकरणानुवृत्तजीवप्रधानवैलक्षण्यस्य साध्यस्यापि निर्वाहात् न तृतीयो दोषः प्रसज्यते। अन्तरादिवाक्यानां सदादिवाक्यानां च पूर्वोत्तराधिकरणेषु तेषां तेषां वाक्यानामवधारितं ब्रह्मपरत्वमेवात्रापि व्यवस्थाप्यत इति, नैतेष्वदृष्टस्य साध्यस्य कल्पनमिति, न कस्यापि दोषस्यात्र प्रसङ्ग इति ना'नन्दमयोऽभ्यासादि'ति सूत्रमानन्दमयब्रह्मतासाधनपरम्।

अभ्यासहेतोरानन्दमयब्रह्मतायामनुपपत्तिः। विकारशब्दादि-
त्यादिसूत्रवैयर्थ्यं च।

अयं भावः—'विकारशब्दान्नेति चेन्न प्राचुर्यात्' इति सूत्रे प्राचुर्यशब्देन श्रीभाष्यानुयायिनो 'गुणविभूतिप्रकर्षप्रयुक्तनियतिशयानन्दवत्वस्वरूपार्थो विवक्ष्यत' इति मन्यन्ते। अनेन च शतगुणोत्तरक्रमेणाभ्यस्यमानानन्दवत्वमेव हेतुः प्राचुर्यादिति प्राचुर्यशब्देनापि गम्यते इति विशदमिदम्। यद्ययमेवार्थोऽत्र प्राचुर्यशब्देन सूत्रकाराभिमतः, तर्हि अभ्यासादिति वितथम्। यद्यभ्याससाधनार्थं प्राचुर्यादिति, तर्हि तु अभ्यासात् प्राचुर्यम्, प्राचुर्यादभ्यास इति परस्पराश्रयो दोषः। अतश्चाभ्यासात् इति हेतुसार्थक्यमपि पुच्छब्रह्मवाद एव सम्भवति, नान्यत्रेति स्पष्टम्। सति चैवं 'अभ्यासादि'ति हेतुनिर्देशः कथमानन्दमयब्रह्मतासाधकः? यदि तु अभ्यासशब्देनैव पूर्वोक्तार्थविवक्षा, तर्हि तु विकारशब्दादिति सूत्रवैयर्थ्यम्।

"कामाच्च नानुमानापेक्षा" इति सूत्रे श्रीभाष्यविवरणानुपपत्तिः।

एतेन—'कामाच नानुमानापेक्षा' इति सूत्रमपि—व्याख्यातम्। इद-

मपि सूत्रमानन्दमयपदेन ब्रह्मसमर्पणमिति पक्षे वितथमेव। अनेन हि—आनन्दमयस्य न प्रधानापेक्षा जगत्कारणत्वे जीवस्येवेति प्रतिपाद्यत इति श्रीभाष्यसम्मतं विवरणम्। अत्र प्रधानशब्देन सूक्ष्माचिदेव श्रीभाष्यकारैरपि वक्तव्या, नान्यत्किमपि। सति चैवमिदमेव निवेद्यते—कथं विनाऽचित्संसर्गं परमात्मनोऽपि भवन्मते स्रष्टृत्वमिति। नहि स्वरूपतो ब्रह्म परिणमत इति भवन्तो मन्यन्ते। संकल्पहेतुभूतेन्द्रियशरीराद्यनपेक्षेति तु विवरणमनुमानशब्देन कुत्रापि सूत्रकारेण प्राकृतशरीरं विवक्षितमित्यत्र गमकं विना न सम्भवति। सूत्रकारास्तु प्रत्युत—'नानुमानमतच्छब्दात्' 'आनुमानिकमप्येकेषामिति चेत्' इति सांख्यपरिकल्पितमेव प्रधानमनुमानशब्देन व्यपदिशन्तीति, कथमत्रार्थान्तरकल्पनम्? किंचानुमानानपेक्षायां कामो हेतुरत्र विवक्ष्यते पञ्चमीप्रयोगेण। तत्रानुमानशब्देन करणेन्द्रियादिपरिग्रहे कामोऽनुमानापेक्षाहेतुरेव स्यात्, न तु तदनपेक्षाहेतुः। कामपदेन चात्र स्वकामस्य ग्रहणेन स्वत एव कामयितृत्वमिति विवरणं तु क्लिष्टं सूत्राक्षराननुगुणं च। वस्तुतस्तु दिव्यविग्रहवति भगवति किमनुपपन्नम्? सर्वं तु कामयितृत्वादिकमुपपद्यत एवेति नेदं सूत्रं श्रीभाष्यानुगुणम्।

अद्वैतमते "कामाच्च नानुमानापेक्षा" इति सूत्रस्यार्थस्याद्युपपत्तिः।

अद्वैतमते तु—'ब्रह्म पुच्छमि'ति प्रतिपादितमानन्दमयाधिष्ठानं चेतनमचेतनं वेति न तद्वाक्येन, न वा 'असन्नेवेति तच्छ्लोकेनावगम्यत इति, प्रधानाशङ्कावारणार्थं 'कामाच्चे'ति सूत्रमपेक्षितमेव। अनेन च चेतनत्वं ब्रह्मणो ज्ञानरूपत्वं वा साध्यत इति न किञ्चिदनुपपन्नम्। 'सोऽकामयते'ति तच्छब्दस्य पुल्लिङ्गस्य प्रयोगस्तु पुच्छब्रह्मणो वस्तुगत्याऽऽनन्दमयाभेदः, यः खलु 'तस्माद्वा एतस्मादात्मनः'इत्युपक्रान्तः—तस्माद्वा एतस्मादन्योऽन्तर आत्माऽनन्दमय इत्युपसंहृतश्च, तदभिप्रायेणानुक्तः। 'सैषाऽऽनन्दस्य मीमांसा' इत्यादिकं तु आनन्दमयाधिष्ठानानन्दरूपब्रह्ममीमांसैव, नानन्दमयमीमांसा, मयडश्रवणात्। आनन्दमयाधिष्ठानं शुद्धं ब्रह्म खलु तदैवावधारितं स्यात्, यदि हिरण्यगर्भपर्यन्तानां सर्वेषां जीवानां तद्विकारत्वम्, तत्तात्म्यमात्रेणानन्दवत्त्वम्, नतु स्वरूपत इत्युपपादितं स्यात्।

आनन्दमीमांसायाः पुच्छब्रह्ममीमांसात्वम्

एतेन—यद्यानन्दमयो न परमात्मा, तर्हि 'सैषानन्दस्य मीमांसे'ति कस्यानन्दमीमांसा ? न तावत् ब्रह्मणः ; ब्रह्मण आनन्दवत्तायास्त्वत्पक्षे प्रागनुक्तत्वात्' इति पर्यनुयोगोऽपि—समाहितप्राय एव । आनन्दस्वरूपजिज्ञासा हीयं नानन्दरूपधर्मजिज्ञासा । ब्रह्मानन्दपर्यन्तमेवानन्दधर्मविचारणं भवति । अत एव—'यतो वाचो निवर्तन्ते' इत्यत्रानन्दं ब्रह्मणो विद्वानित्यभेद एव षष्ठी राहोः शिर इतिवत् । यतो 'रसो वै स'इत्यनुपदमेवानन्दरूपत्वं ब्रह्मणः प्रतिपादितम्, ननु,तद्ब्रह्मावबोधकमिति कस्यापि मतम् । 'रसो वै सः' 'रसं ह्येवायं लब्ध्वे'ति वाक्ये सशब्देन परोक्षमयंशब्देन च प्रत्यक्षं स्वरूपं निर्दिश्यते । तत्र पूर्वतनवाक्यप्रस्तुतमपि ब्रह्म परोक्षत्वात् सपदेन, अयंपदेन चानन्दमयः परामृश्यत इत्येव युक्तमिति, नेदं प्रकरणमानन्दमयब्रह्मतायां गमकम् । अतश्चानन्दमयः, न ब्रह्म, ब्रह्मप्राप्तिनिबन्धनानन्दवत्वात्, इति सत्प्रतिपक्षानुमानान्तरमप्यानन्दमयब्रह्मतावादे समापततीति सूचितम् । अयमेवार्थः—'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' इति सूत्राभ्यां बोध्यते । इतरः आनन्दमयः, न ब्रह्मेति योजना 'रसं लब्ध्वेति भेदव्यपदेशाच्चेति ।

आनन्दवल्यामानन्दमयस्थाने आनन्दप्रयोगो ब्रह्मवल्यामानन्दमयस्य विकारत्वे गमकः ।

अत्र ब्रह्मवल्यन्नमयादिभेदव्यपदेशात् कार्यान्नमयादिमुखेन मयडन्तपदेन ब्रह्मस्वरूपम्, भृगुवल्ली तु मयट्परित्यागेन तत्कारणान्नादिमुखेन कारणं ब्रह्म निर्दिशतीति वक्तव्यम् । सति चैवं वल्लीद्वये मयड्प्रयोगतदभावयोरुपपत्तिः संभवति । सति चैवं भृगुवल्यामपि आनन्दपर्याये मयट्परित्यागेनैवानन्दमयस्थाने आनन्दपदप्रयोगात् आनन्दमयस्याप्यधिष्ठानं शुद्धं ब्रह्मैव तत्र बोध्यत इति विशदं प्रतीयते । अन्यथाऽन्नमयादिविलक्षणत्वस्यानन्दमये विवक्षायां भृगुवल्ल्यां मयडपरित्यागेनानन्दमयोपदेशस्यैव युक्ततया तत्परित्यागेन—'आनन्दो ब्रह्मेति व्यजानात्' इति विना मयटमानन्दपदमात्रप्रयोगोऽनुपपन्न एव स्यात् । भृगुवल्यां कारणमुखेनैव तदभिन्नतया ब्रह्म निर्दिश्यत इति 'सैषा भार्गवी वारुणी विद्या पर-

व्योमन् प्रतिष्ठिते'ति वाक्येनापि गम्यते। अत्र परमव्योमपदप्रयोगेणाकाशाधिकरणवाक्यं स्मारितं भवतीति, 'यतो वा इमानि भूतानि जायन्ते' इत्युपदेशोपक्रमस्यापि स्वरसता सिद्धा भवति। अयमेवार्थः—'तद्धेतुव्यपदेशाच्चे'ति सूत्रेण सूच्यते। यथाचा'नन्दमयमात्मानमुपसंक्रम्ये'त्युपसंक्रमितव्यत्वश्रवणमपि 'अहमन्नमहमन्नमि'ति तादात्म्योपपादकमद्वैतमत एव स्वरसम्, तथाऽन्यत्र व्यक्तम्।

पुच्छब्रह्मवाद एवानन्दमयाधिकरणस्वारस्यम्, 'आनन्दमय'
इति सूत्रांशोपपत्तिश्च।

एवं च पुच्छब्रह्मप्राधान्यवाद एव सूत्रस्वारस्यम्; यतोऽत्राभ्यासपदं तात्पर्यग्राहकपरमेव स्वीक्रियते, न लक्षणयान्यार्थबोधकम्। आनन्दमयपदं तु पक्षसमर्पकं तद्घटितवाक्यपरमिति कल्पनायामपि न दोषः, यतोऽत्र वाक्यानामेव विषयता। आनन्दमयवाक्यं च पुच्छवाक्यान्तमेव सर्वैरपि विवक्षणीयम्। एवं च आनन्दमयवाक्यम्, पुच्छब्रह्मप्रधानम्, अभ्यस्यमानब्रह्मशब्दघटितवाक्यशेषवत्त्वात् इत्येवात्र सूत्रार्थः। पुच्छब्रह्मप्राधान्ये चार्थात् जीव एवानन्दमयो भवति। सर्वतादात्म्येऽपि ब्रह्मणोऽभेदे सामानाधिकरण्यं जीवेनैव, नान्येनेति 'तत्त्वमसी'ति वाक्यार्थ एवात्राऽन्ततयाऽऽनन्दमयात्मतयैवोपदेशसमापनेन ज्ञाप्यते। तत्रच जीवेनाभेदे सामानाधिकरण्यं चैतन्यांशमात्रमादायैवेति सूचनार्थं पुच्छब्रह्मवाक्यम्। सति चैवं विगलितकोशकं प्रत्यगात्मस्वरूपमेव ब्रह्म, नातिरिक्तं किञ्चिदिति फलति। 'आनन्दमयोऽभ्यासादि'ति सूत्रे आनन्दमयपदप्रयोगोऽपि जन्मादिसूत्रप्रतिपादितं ब्रह्मस्वरूपं प्रत्यगात्मस्वरूपमेवेति सूचनार्थ एव।

'तस्यैष एव शारीर आत्मे'ति वाक्यस्य पुच्छब्रह्मवाद एवोपपत्तिः।
ब्रह्मणोऽशरीरस्यैवोपदेशनिमित्तानि च।

अत एव—'तस्यैष एव शारीर आत्मा। यः पूर्वस्ये'त्यानन्दमयस्यापि शारीरोऽयमुपदिश्यमान आत्मेति वर्णितमुपपद्यते। श्रीभाष्यमते तु—आनन्दमयस्याप्ययमेवात्मेति स्वस्मिन्नेव प्रतिष्ठितत्वं प्रतिपाद्यत इति वाक्यस्यास्य

विवरणं कर्तव्यमिति, पूर्वतनपर्यायगततदाकारवाक्यविलक्षणतया योजनमपि दूषणमपरिहरणीयमेव। अत्रैपपदेनाव्यवहितनिर्दिष्टपुच्छब्रह्मविवक्षायां तु नेदं दूषणमवसरति। परमात्मा यदि शारीरत्वेन श्रीभाष्योक्तदिशा प्रतिपिपादयिषितः, तर्हि अन्नमयपर्याये कथं न शारीरत्वमाम्नातम्? इदमेवातो जानीमः—यत् शरीरशरीरिभावेनाभेदोपदेशार्थं नेदं प्रकरणम्।

अन्यथा स्थूलचिदचिच्छरीकत्वात् परमात्मनोऽन्नमयशरीरमिव प्राणादिकमपि तस्यैव शरीरमिति—'अन्योऽन्तर आत्मा प्राणमयः, अन्योऽन्तर आत्मा मनोमय' इति भेदनिरूपणं कथमुपपद्यते? कथं वा चान्नमयादिपदमपि मुख्यब्रह्मनिरूपणपरमेव न भवति? इष्टापत्तौ चानन्दमय इति सूत्रास्वारस्यमपरिहरणीयमेव। अधिकमद्वैतदीपिकायामस्मदीयायां व्यक्तम्। एतेन—प्रथमं स्थूलं शरीरम्, तदनन्तरं प्राणमयम्, तदनन्तरं मनोमयम्, तदनन्तरं विज्ञानमयम्—'एष स आत्मे'त्युपदिश्य तैत्तरीयोपनिषदुपरतेति मार्ताण्डोक्तिरपि—व्याख्याता। इदं हि व्याख्यानं यदि स्वमतरीत्या, तर्हि कथमनन्तरस्यानन्तरस्यैवात्मतया परमात्मनिरूपणमुपपद्यते? न तु सर्वस्यात्मतया।

आनन्दमयाब्रह्मतायां 'प्रियशिरस्त्वाद्यप्राप्तिरि"ति सूत्रविरोधः।

इदं तु श्रीभाष्यानुयायिभिरपि स्वीकर्तव्यम्—यदानन्दमयपर्याये न प्रियशिरस्त्वादिमान् परमात्मा प्रतिपाद्यते इति। अन्यथा हि—'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' इति भेदनिषेधपुरस्सरं प्रियशिरस्त्वादीनां न ब्रह्मधर्मत्वमिति प्रतिपादनं तत्रासङ्गतमेव स्यात्। सम्मतं चैतत् श्रीभाष्यकाराणामपि – यत् शिरःपक्षपुच्छाद्यवयवभेदे सति ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम्। तथाच सति 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति विरोधो न' इति वदताम्। इदमेवात्रालोचनीयम्—यदनेन सूत्रेणानन्दमयस्यावयवित्वमेव बाध्यते, उत ब्रह्मणोऽपि तस्य प्रियशिरस्त्वादिकं न धर्म इति तस्य ब्रह्मधर्मत्वनिषेधमात्रमिति। इदं तु प्रतिभाति — यत् सत्यज्ञानवाक्यप्रस्तुतं ब्रह्म ज्ञेयं नानन्दमयवाक्येन समर्प्यते, किन्तु वाक्यान्तरेणैव; अन्यथा हि ब्रह्मणोऽनित्यत्वं स्यादित्येव सूत्रकारा मन्यन्त इति, 'मान्त्रवर्णिकं ब्रह्म नानन्दमयवाक्यार्थः, किन्तु पुच्छब्रह्मवाक्यस्यैवार्थ': इति;

अन्यथा कल्पितमेव प्रियशिरस्त्वादिकं किमिति ज्ञेयस्य ब्रह्मणस्तत्र निर्दिश्यते इति सर्व एव समालोचयन्तु ।

सति चैवं—'प्रियशिरस्त्वाद्यप्राप्तिरि'ति वस्तुगतिनिरूपणपरं वाक्यं केषांचनानन्दमयब्रह्मतावादनिषेधार्थमेवेति गम्यत इति, स्वयमेव सूत्रकाराः आनन्दमयोऽभ्यासादित्यत्रानन्दमयपदस्य यथाश्रुतस्य न पक्षसमर्पकत्वम्, किन्तु तत्पर्यायघटकब्रह्मशब्दस्यैव तदिति सूचयन्ति । सूत्रघटकानां पदानामेवं योजनं हि—'सर्वत्र प्रसिद्धोपदेशादि'त्यत्र' सर्वं खल्विति घटकब्रह्मपदं सर्वत्रपदेन विवक्ष्यत इति मन्वानानां श्रीभाष्यकाराणामपि न विप्रतिपन्नम् । एतेन—'यद्यानन्दमयस्याब्रह्मतामभिदध्यात् सूत्रकारः, कथं तर्हि प्रियशिरस्त्वादीनामब्रह्मधर्माणां सर्वत्र प्राप्तिमाशङ्केत' इति प्रत्यवस्थानमपि परिहृतम् । नहि ब्रह्मधर्माणां तेषां निषेधोऽपि सुशक इत्यानन्दमयाधिष्ठान-परज्योतिरेव ब्रह्म, नत्वानन्दमयः ।

परं ज्योतिः पदार्थोऽहंकारशून्यात्मस्वरूपम् ।

'संपद्याविर्भाव'इति आविर्भूतं स्वरूपं प्रतिज्ञाय 'मुक्तः प्रतिज्ञानादि'ति सूत्रणात् स्वरूपाविर्भावो नाम नातिरिक्तं स्वरूपमादाय, किन्तु निर्गलितबन्धमेवेति सूच्यते । तथाचाहंकाराद्युपाधिविलय एव मोक्षः, येन शुद्धत्वमात्मनो भवति । सति चैवं 'परंज्योतिः' पदार्थोऽप्यात्मैव बोध्यते ।

आत्मपदेन चात्र स्वस्वरूपमेवोच्यते । तच्च व्यष्टिसमष्ट्युपहिताभेदवाददृष्ट्येश्वरस्वरूपमेवेति—ब्राह्मेणेत्यादि सूत्रेण वर्ण्यते । एवंच फलाध्यायप्रतिपाद्यं सर्वं वस्तु ब्राह्माधिकरणेनैव समापितम् । सगुणविद्यानामपि कासांचिदर्चिरादिना ब्रह्मलोकप्रापणद्वारा परम्परया मोक्षोपयोगः, योऽयमभिमतः 'कार्यात्यये तदध्यक्षेणे'त्यादि सूत्रसूचितः, तत्रापि गौणमोक्षरूपत्वात् कार्यब्रह्मप्राप्त्यादेः, तत्रत्या अपि विशेषाः समालोचनीया इति 'संकल्पादेवे'त्याद्यधिकरणजातमिति वस्तुस्थितिः । अनया च परिस्थित्या विशदमिदं ज्ञायते—यत् परमसाम्यमभेद एवात्रात्यन्तिको विवक्षितः, नतु शरीरशरीरिभावादिः ।

इदमत्रालोचनीयम्—यत् श्रीभाष्यमतेऽपि यत्र मुक्तिदशायां विक-

सितधर्मभूतज्ञानात्मकानां जीवानां ब्रह्मणा शरीरशरीरिभाव एव विवक्ष्यते, तत्रोपक्षीणकर्मणां शरीरनाशमात्रेण विनापि लोकान्तरगमनं कथमुक्तरूपा मुक्तिर्न भवति ? भगवदिच्छया तिरोहितस्यापहतपाप्मत्वादेरिहैव भगवत्साक्षात्कारे सति भगवदिच्छया संभव इति कल्पनायामपि न दोषो भवितेति व्यर्थं मुक्तेरुत्क्रमणापेक्षा तेषामपि मते ।

ब्रह्मप्राप्तत्वव्यपदेशादीनामुत्क्रमणाविषयत्वम् ।

'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' इति हि कठवल्लीवाक्यं व्यापकपरमात्मरूपस्थानमध्वनः परमतिक्रान्तमार्गम्, गत्यागत्यादिसम्बन्धरहितम्, मनोनिग्रहादिपूर्वकज्ञानमात्रप्राप्यम्, नतु आतिवाहिकामानवपुरुषादिसाहाय्यमत्राप्यपेक्ष्यत इति बोधयत् विशदमुत्क्रान्तिनिरपेक्षतां मुक्तेर्गमयति । एतेन—'सोऽध्वनः परमाप्नोति' इति मन्त्रे तद्विद्यानिष्ठस्य वैष्णवपदप्राप्त्यभिधानात् तत्पदप्राप्तेश्च देहादुत्क्रान्तिसाध्यतया तस्याप्युत्क्रान्तिरिति शङ्कापि—परिहृता ?

अध्वनः परमित्यादि विशेषणवैयर्थ्यात् । प्राप्यत्वव्यपदेशस्तु ब्रह्मणोऽप्राप्तत्वभ्रमनिवारणार्थ एवेति तत्र तत्र व्यक्तम् । प्राप्यत्वं हि प्राप्तस्याविद्यांशनिरसनेनोपसर्पणसदृशम्, नतूत्क्रम्य गम्यमानत्वमिति सूत्रकारा मन्यन्ते । *अत एव 'मुक्तोपसृप्यव्यपदेशात्' इति मुक्तोपसृप्यत्वमेव वर्णितम्,* नतु केवलप्राप्यत्वमत्यन्तविभागसाध्यम् । एतेन—मुक्तोपसृप्यसूत्रस्योत्क्रान्तिसूचकतया स्वानुगुणं योजनमपि—परास्तम् । जलूकोदाहरणमविद्वद्विषयम्, नतु विद्वद्विषयम् । नहि तत्रोपसंक्रमणं प्रतिपादितम्, किन्त्वाक्रमणपूर्वकमुपसंहरणम् ।

आक्रमणपूर्वकोपसंहरणं हि संकोचविकाससाध्यं न सूत्रकाराभिमतमिति कृत्वैव भगवत्पादा भाविशरीरविज्ञानमात्रपूर्वकं पूर्वतनशरीरत्यागं मन्यन्ते । एतेन—अन्नमयाद्युपसंक्रमणमपि—व्याख्यातम् । नह्युत्क्रमणसाध्यं तदाक्रमणम् , किन्तु विज्ञानमात्रम् । नहि शरीरत्यागपूर्वकं प्राणमयादिप्राप्तिः । तथाचानन्दमयब्रह्मतावादेऽपि विज्ञानमात्रमेवोपसंक्रमणं विवक्षित-

अन्यथा कल्पितमेव प्रियशिरस्त्वादिकं किमिति ज्ञेयस्य ब्रह्मणस्तत्र निर्दिश्यते इति सर्व एव समालोचयन्तु ।

सति चैवं—'प्रियशिरस्त्वाद्यप्राप्तिरि'ति वस्तुगतिनिरूपणपरं वाक्यं केषांचनानन्दमयब्रह्मतावादनिषेधार्थमेवेति गम्यत इति, स्वयमेव सूत्रकाराः आनन्दमयोऽभ्यासादित्यत्रानन्दमयपदस्य यथाश्रुतस्य न पक्षसमर्पकत्वम्, किन्तु तत्पर्यायघटकब्रह्मशब्दस्यैव तदिति सूचयन्ति । सूत्रघटकानां पदानामेवं योजनं हि—'सर्वत्र प्रसिद्धोपदेशादि'त्यत्र' सर्वं खल्वितिघटकब्रह्मपदं सर्वत्रपदेन विवक्ष्यत इति मन्वानानां श्रीभाष्यकाराणामपि न विप्रतिपन्नम् । एतेन—'यद्यानन्दमयस्याब्रह्मतामभिदध्यात् सूत्रकारः, कथं तर्हि प्रियशिरस्त्वादीनामब्रह्मधर्माणां सर्वत्र प्राप्तिमाशङ्केत' इति प्रत्यवस्थानमपि परिहृतम् । नहि ब्रह्मधर्माणां तेषां निषेधोऽपि सुशक इत्यानन्दमयाधिष्ठान-परज्योतिरेव ब्रह्म, नत्वानन्दमयः ।

परं ज्योतिः पदार्थोऽहंकारशून्यात्मस्वरूपम् ।

'संपद्याविर्भाव'इति आविर्भूतं स्वरूपं प्रतिज्ञाय 'मुक्तः प्रतिज्ञानादि'ति सूत्रणात् स्वरूपाविर्भावो नाम नातिरिक्तं स्वरूपमादाय, किन्तु निर्गलितबन्धमेवेति सूच्यते । तथाचाहंकाराद्युपाधिविलय एव मोक्षः, येन शुद्धत्वमात्मनो भवति । सति चैवं 'परंज्योतिः' पदार्थोऽप्यात्मैव बोध्यते ।

आत्मपदेन चात्र स्वस्वरूपमेवोच्यते । तच्च व्यष्टिसमष्ट्युपहिताभेदवादद्दष्ट्येश्वरस्वरूपमेवेति—ब्राह्मेणेत्यादि सूत्रेण वर्ण्यते । एवंच फलाध्यायप्रतिपाद्यं सर्वं वस्तु ब्राह्माधिकरणेनैव समापितम् । सगुणविद्यानामपि कासांचिदर्चिरादिना ब्रह्मलोकप्रापणद्वारा परम्परया मोक्षोपयोगः, योऽयमभिमतः 'कार्यात्यये तदध्यक्षेणे'त्यादि सूत्रसूचितः, तत्रापि गौणमोक्षरूपत्वात् कार्यब्रह्मप्राप्त्यादेः, तत्रत्या अपि विशेषाः समालोचनीया इति 'संकल्पादेवे'त्याद्यधिकरणजातमिति वस्तुस्थितिः । अनया च परिस्थित्या विशदमिदं ज्ञायते—यत् परमसाम्यमभेद एवात्रात्यन्तिको विवक्षितः, नतु शरीरशरीरिभावादिः ।

इदमत्रालोचनीयम्—यत् श्रीभाष्यमतेऽपि यत्र मुक्तिदशायां विक-

सितधर्मभूतज्ञानात्मकानां जीवानां ब्रह्मणा शरीरशरीरिभाव एव विवक्ष्यते, तत्रोपक्षीणकर्मणां शरीरनाशमात्रेण विनापि लोकान्तरगमनं कथमुक्तरूपा मुक्तिर्न भवति ? भगवदिच्छया तिरोहितस्यापहतपाप्मत्वादेरिहैव भगवत्साक्षात्कारे सति भगवदिच्छया संभव इति कल्पनायामपि न दोषो भवितेति व्यर्थं मुक्तेरुत्क्रमणापेक्षा तेषामपि मते ।

ब्रह्मप्राप्तत्वव्यपदेशादीनामुत्क्रमणाविषयत्वम् ।

'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः । सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' इति हि कण्ठवल्लीवाक्यं व्यापकपरमात्मरूपस्थानमध्वनः परमतिक्रान्तमार्गम्, गत्यागत्यादिसम्बन्धरहितम्, मनोनिग्रहादिपूर्वकज्ञानमात्रप्राप्यम्, नतु आतिवाहिकामानवपुरुषादिसाहाय्यमत्राप्येक्ष्यत इति बोधयत् विशदमुत्क्रान्तिनिरपेक्षतां मुक्तेर्गमयति । एतेन—'सोऽध्वनः परमाप्नोति' इति मन्त्रे तद्विद्यानिष्ठस्य वैष्णवपदप्राप्त्यभिधानात् तत्पदप्राप्तेश्च देहादुत्क्रान्तिसाध्यतया तस्याप्युत्क्रान्तिरिति शङ्कापि—परिहृता ?

अध्वनः परमित्यादि विशेषणवैयर्थ्यात् । प्राप्तव्यत्वव्यपदेशस्तु ब्रह्मणोऽप्राप्तत्वभ्रमनिवारणार्थ एवेति तत्र तत्र व्यक्तम् । प्राप्यत्वं हि प्राप्तस्याविद्यांशनिरसनेनोपसर्पणसदृशम्, नतूत्क्रम्य गम्यमानत्वमिति सूत्रकारा मन्यन्ते । अत एव 'मुक्तोपसृप्यव्यपदेशात्' इति मुक्तोपसृप्यत्वमेव वर्णितम्, नतु केवलप्राप्यत्वमत्यन्तविभागसाध्यम् । एतेन—मुक्तोपसृप्यसूत्रस्योत्क्रान्तिसूचकतया स्वानुगुणं योजनमपि—परास्तम् । जलूकोदाहरणमविद्वद्विषयम्, नतु विद्वद्विषयम् । नहि तत्रोपसंक्रमणं प्रतिपादितम्, किन्त्वाक्रमणपूर्वकमुपसंहरणम् ।

आक्रमणपूर्वकोपसंहरणं हि संकोचविकाससाध्यं न सूत्रकाराभिमतमिति कृत्वैव भगवत्पादा भाविशरीरविज्ञानमात्रपूर्वकं पूर्वतनशरीरत्यागं मन्यन्ते । एतेन—अन्नमयाद्युपसंक्रमणमपि—व्याख्यातम् । नह्युत्क्रमणसाध्यं तदाक्रमणम् , किन्तु विज्ञानमात्रम् । नहि शरीरत्यागपूर्वकं प्राणमयादिप्राप्तिः । तथाचानन्दमयब्रह्मतावादेऽपि विज्ञानमात्रमेवोपसंक्रामणं विवक्षित-

मिति वक्तव्यम्। एवंच एतादृश्येव प्राप्तिर्ब्रह्मण इति प्राप्तिवचनान्यथा-नुपपत्त्या न तत्सगुणत्वादि युक्तम्। सर्वथा तु सगुणवाक्यानि निर्गुणवाक्यानीति द्विविधानि वाक्यानि गृहीत्वैव ब्रह्ममीमांसायाः प्रवृत्तिः, नतु सगुणविद्यामात्राभिप्रायतया। तत्र च निर्गुण एव परमतात्पर्यमिति, न केवलम्—'न स्थानतोऽपी'त्यधिकरणेन, किन्तु 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इत्याद्यधिकरणेनापि लभ्यते।

'प्रकृतैतावत्त्वमि'ति सूत्रस्याद्वैत एव स्वारस्यम्।

तथाहि—'प्रकृतैतावत्त्वं हि प्रतिषेधति' इति सूत्रं हि प्रकृतमेतावत्त्वं परिच्छिन्नं मूर्तामूर्तादिरूपं निषेधति—'अथात आदेशो नेति नेती'ति। अत्र कर्मधारयसमासात् षष्ठी समासो गुरुरिति 'निषादस्थपत्यधिकरणन्यायेनाद्वैतिनां विवरणमेव योग्यं प्रतिभाति, नतु प्रकृतानां गुणानामियत्तामिति विवरणमन्येषाम्। तदुक्तं मार्तण्डे—'नेति नेती'त्यस्य गुणनिषेधपरत्वे तदुत्तरं बहुतरगुणविधानायोगात्—'नेति नेती' त्ययं निषेधो न गुणविभूतिविषयः, किन्तु रूपद्वयेऽभिहिते एतावद्रूपस्य रूपमिति रूपेयत्ता या प्राप्ता,तद्विषय इति। श्रीभाष्येऽप्युक्तम्—'प्रकृतगुणविशेषयोगित्वमात्रं ब्रह्मणः प्रतिषेधति' इति। एतेन—'भवदूषणं केवलाज्ञाननिबन्धनम्; नात्र गुणेयत्तानिषेधो वर्णितः श्रीभाष्ये इति विमर्शोऽपि—व्याख्यातः। मार्तण्ड-श्रीभाष्यकारादिभिरेवास्य दत्तोत्तरत्वात्।

इदमेवात्र पृच्छ्यते—'उक्तप्रकारमात्रं विशिष्टं ब्रह्म न भवती'ति भवदनूदितश्रीभाष्ये ब्रह्मणि गुणान्तराणामपि साधनीयत्वात् प्रकृतगुणविशेषमात्रं 'नेतिनेती'ति निषेधविषय इति खल्वर्थ इति,कथं गुणेयत्तानिषेधपरत्वं श्रीभाष्यकाराणामि'त्येतदनुवादोऽनुपपन्न इति भवन्त एव स्वयमाचार्याः समालोचयन्तु।

प्रकृतैतावत्त्वपदेन शून्यवादनिरास एव मन्यते, नाद्वैतमतनिरासः।

'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे'ति मूर्तामूर्तपदबोध्यात् रूपादतिरिक्तं हि गुणादिकं किम्? यत् परिशेषितमस्ति। यस्य समर्थनार्थमियत्तानिषेधोऽत्र विवक्षणीयः। तथाच प्रकृतं परिच्छिन्नत्वं सगुणत्वं गुणा एव प्रतिषिध्यन्ते,नतु ब्रह्मापीति शून्यवादनिरास एवात्र विवक्षितः। एतेन—रूपप्रतिप्रतिषेधस्य विव-

क्षितत्वे 'प्रकृतैतावद्धी'ति ह्युच्येत, नतु तथोक्तम्। अतः सूत्राक्षराननुगुणत्वं स्पष्टमिति शङ्कापि—परिहृता; 'एतावदि' ति सूत्रणे हि धर्मिणोऽपि निषेधः स्यादिति, धर्ममात्रनिषेधार्थत्वेन तथा सूत्रणसार्थक्यात्। अत एव 'ततो ब्रवीति च भूय' इति सूत्रांशः स्वरसो भवति। 'अथात आदेशो नेति नेती'ति वाक्यानन्तरं हि 'अथ नामधेयमि'ति 'सत्यस्य सत्यमि'त्यधिष्ठानमेकमेव सत्यपदाभिधेयं बोध्यते, नान्ये केऽपि गुणा इति, श्रीभाष्यकाराणामुपरि गुणानामपरेषामुपदेशपरतया विवरणमसांप्रतमेव।

'तदव्यक्तमाह ही' सूत्रार्थनिष्कर्षः।

एतेन—'तदव्यक्तमाह ही'त्यपि—व्याख्यातम्। अनेन हि ब्रह्मणोऽवाङ्मानसगोचरस्याव्यक्तस्य न प्रतिषेधयोग्यतेति प्रतिपादनमेव सङ्गतमिति मतद्वयसंप्रतिपन्नमिदम्। इयान् विशेषः—यत् सगुणं ब्रह्म विवक्ष्यत इति मतान्तरम्, शुद्धं चैतन्यमात्रमित्यस्माकम्। सूत्रकारास्तु—गुणनिषेधानन्तरमव्यक्तपदं प्रयुञ्जाना निर्गुणं स्वरूपमेवात्र विवक्षन्तीति पिष्टपेषणमिदम्। अव्यक्तं च तत्स्वरूपं न केवलं श्रुत्या, किन्तु स्मृत्याप्यवगम्यते—यत् ध्यानकाले सर्वैरपि प्रत्यक्षीकरणमर्हतीत्यादौ न विप्रतिपत्तिलेशोऽपि। एतेन—'नेति नेतीत्यस्य गुणनिषेधार्थत्वे तदुत्तरं पुनर्बहुतरगुणविधानायोगाच्चेति' मार्ताण्डोक्तिः— व्याख्याता। बृहदारण्यकद्वितीयाध्याये द्वितीयब्राह्मणस्या'थात आदेश' इति वाक्येनैव समाप्तिः, अनन्तरं तु मैत्रेयीयाज्ञवल्क्य संवादादिकं विषयान्तरमेवेति, कुत्रवोत्तरं बहुतरा गुणा विधीयन्ते।

ब्रह्मनिर्गुणत्वे गुणकल्पनावैयर्थ्यमिति शङ्कापरिहारः।

'प्रक्षालनाद्धि पङ्कस्ये' ति न्यायानुसारेण शङ्कातत्समाधानादिकं सर्वं भाष्य एव व्यक्तम्। निर्गुणस्य हि ब्रह्मणः कल्पितेन रूपेणैवोपदेशः संभवति। लोकसिद्धानां ब्रह्मणि कल्पनामात्रेण निषेधो हि न दोषाय—'मूषानिषिक्तद्रुतताम्रादि' न्यायेनेति व्यक्तमिदं सूचितं तैत्तरीयोपनिषदि; अन्यथा तत्रापि श्रुत्युपदिष्टस्य शरीरात्मभावस्य श्रुत्यैव निषेधेऽप्युन्मत्तप्रलापापत्त्या शरीरात्मवादोऽपि श्रौतः स्यात्, प्राणाद्यात्मतावादोऽपीति कथं तत्प्रामाण्यस्यैव

निर्वाहः ? एतेन—महता प्रबन्धेन वेदान्तेषु प्रतिपादितस्य ब्रह्मणो मूर्तामूर्तादिप्रपञ्चेन रूपवत्त्वस्य मानान्तराप्राप्तत्वेनानुवादानर्हतया श्रुत्या विधित्सितत्वेनैवाभ्युपगन्तव्यतया प्रतिषेधोऽनुपपन्न इत्यादिशङ्कापि—परास्ता । अन्नमयवाक्यावगतशरीरादिमात्रात्मतावादोऽपि हि प्रमाणान्तरासिद्ध एव, यतः प्रत्यक्षेणेन्द्रियादीनामपि प्राणादीनामिवात्मताऽनुभूयत इति तस्यापि हि श्रौतत्वापत्तिः ।

भूमविद्याया अहंकारसम्बन्धरहितात्मस्वरूपबोधनेन
अद्वैतपर्यवसानस्वारस्यम् ।

एतेन—भूमविद्यापि—व्याख्याता; तस्या अपि निर्गुणब्रह्मण्येव तात्पर्यात् । अत एव—'भूमविद्यायास्तमसः पारं दर्शयति भगवान् सनत्कुमार' इत्युपसंहार उपपद्यते । तमसः पारशब्देन हि तमःशब्दवाच्यप्रकृतिसम्बन्धशून्यं भूमाख्यं ब्रह्मेति गम्यत इति, प्रकृतिशरीरं ब्रह्म कथं वोक्तविद्यातात्पर्यविषयः स्यात् ? न केवलमुपसंहारः, किन्तु 'तरति शोकमात्मवित्' इत्युपक्रमः, 'अथात आत्मादेश' इति मध्यपरामर्शश्चात्र प्रमाणम् । अत्र हि प्रकरणे भूमाख्यं ब्रह्माहंकारादिविविक्तं केवलानन्दरूपमात्मस्वरूपमेव ततस्ततो भूयस्त्वेन प्रतिपाद्यते इति कथं वा ब्रह्म चिदचिच्छरीरकमिति वाद उक्तप्रकरणार्थो भवेत् ?

स एकधा भवतीत्यादीनां स्तुत्यर्थत्वम् ।

आत्मन एव सर्वोत्पत्त्यादिवर्णनानन्तरं 'स एकधा भवती'त्यादिना बहुभाववर्णनमपि स्तुत्यर्थमेवात्र प्रतिपाद्यत इति स्थितेऽपि न हानिः—सगुणविद्यायामपि बहुभावे किमु वक्तव्यं निर्गुणभाव इति । तथाच सगुणविद्याफलस्यैवात्रानुवादः स्तुत्यर्थ इति फलति । अभावाधिकरणे फलपादेऽपि सगुणविद्योपासकानामेव निरवग्रहैश्वर्यं व्यवस्थाप्यत इति न किञ्चिदनुपपन्नम् । एतेन—'स एकधा भवति' इत्यादेः स्तुतिमात्रत्वेऽभावाधिकरणे फलपादे उक्तश्रुतिप्रमाणेनानेकशरीरपरिग्रहलक्षणैश्वर्यस्य सगुणविद्याफलत्वव्यवस्थापनासङ्गतेरिति शङ्कापि—परिहृता ।

अभावाधिकरणस्य सगुणमुक्तविषयत्वम्,
सगुणमुक्तेस्सशरीराशरीरोभयरूपत्वं च।

अभावाधिकरणं हि सगुणविद्योपासनया प्राप्तब्रह्मलोकानपुनरावर्तमानान् मुक्तकल्पानेव विषयीकरोति, नतु मुख्यमुक्तानिति हि भगवत्पादा मन्यन्ते। सति चैवम्—'यदि सगुणमुक्तिर्निर्गुणमुक्तिश्चेति मुक्तिर्द्विविधा, तत्र निर्गुणमुक्तिरशरीरस्वरूपा, सगुणमुक्तिः सशरीरस्वरूपेति सूत्रणं स्यात्' इति शङ्कापि नाद्वैतमतमधिकृत्य संभवति ; यतो नात्राद्वैतिना निर्गुणमुक्तेरशरीरत्वं सगुणमुक्तेः सशरीरत्वमिति व्यवस्थापयन्ति, किन्तु सगुणमुक्तावेवावान्तरमुक्तिरूपायां सशरीरत्वाशरीरत्वे। अत एव 'तन्वभावे सन्ध्यवदुपपत्तेरि'ति सूत्रमुपपद्यते। न हि निर्गुणमुक्तौ सन्ध्यवदपि सशरीरत्वम्। अत्र—'तन्वभावे सन्ध्यवत्' 'भावे जाग्रवत्' इति विभागोऽयं श्रीभाष्यमतेऽनुपपन्न एव स्यात्। यत उभयत्रापीश्वरसृष्टेन प्रपञ्चेन व्यवस्थां श्रीभाष्यकारा मन्यन्ते—मायामात्रमित्यस्येश्वरसृष्टत्वमित्यर्थवर्णनेनेति, सगुणमुक्तिमेवाधिकृत्याभावाधिकरणम्। इयान् विशेषः—यत् सेयमवान्तरमुक्तिरेव न परमा मुक्तिरिति। परममुक्तौ हि नार्चिरादिमार्गापेक्षेति पूर्वमेव विवेचितम्। 'संपद्याविर्भाव' इति सूत्रं हि परज्योतिरुपसदनसाध्य एव स्वरूपाविर्भावः, नतु गत्यादिसाध्य इति विवेचयति। अत्र परज्योतिरुपसदनमात्मसाक्षात्कार एव, नतु देशविशेषावस्थितस्वरूपसाक्षात्कारादिः। अन्यथा हि 'शरीरात् समुत्थाये'ति पदं वितथमेव स्यात्। नहि विना शरीरोत्क्रमणं न परज्योतिःप्राप्तिरिति सर्वविदितमिदम्। अतो ज्ञाप्यते परज्योतिरुपसदनं नोत्क्रमणमपेक्ष्य, किन्तु शरीरादुत्थानमपेक्ष्यैव। तच्च ततो विवेकग्रहणमेवेत्यादि पूर्वमेव विवेचितम्। एतेन—संपद्याविर्भावाधिकरणे—अर्चिरादिमार्गेण देशविशेषे वासुदेवाख्यपरज्योतिरुपसन्नस्य मुक्तिरुक्ता' इत्यादिशङ्कापि पराहता। यत्तु 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगादि'ति सूत्रम्, तत्पूर्वोक्तैः कारणैरपराविद्याविषयम्, नतु परविद्याविषयमित्यपि व्याख्यातप्रायमेव।

आत्मस्वरूपाज्ञान-ज्ञानप्रयुक्तौ बन्धमोक्षौ, स्वाप्निकमिथ्यात्व एव सूत्रस्वारस्यं च।

शरीरादिविवेकाग्रहणमेव हि सर्वस्य बन्धस्य निदानम्, परमात्मभाव-

प्रतिबन्धकं च । 'तरति शोकमात्मविदि'त्यात्मज्ञानमेव हि बन्धनिवर्तकं शास्त्रमावेदयति । तदिदं सिद्धम्—यत् परञ्ज्योतिरूपनिष्कृष्टपरमात्मस्वरूपाज्ञानप्रयुक्तो बन्धः, तत्स्वरूपसाक्षात्कारप्रयुक्तो मोक्षस्तद्विपर्ययरूप इति । अयमेवार्थः—'पराभिध्यानात्तु तिरोहितम्, ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रेणापि बोध्यते । इदं हि सूत्रं स्वाप्निकानामर्थानां मायिकत्वसाधनानन्तरं प्रवृत्तमिति मतद्वयसंप्रतिपन्नमिदम् । इयान् विशेषः—श्रीभाष्यकाराभिमतं मायिकत्वमीश्वरसृष्टत्वम्, अद्वैताभिमतं तु तदनिर्वचनीयत्वम् । अनेन ह्यधिकरणेन स्वाप्निकानां जागरितप्रपञ्चविलक्षणत्वं प्रतिपाद्यत इत्यद्वैतमतम् । 'वैधर्म्याच न स्वप्नादिवत्' इति विषयाणां ज्ञानाकारातिरिक्ताकारव्यवस्थापनार्थमेव स्वाप्निकानां ज्ञानाकारत्वाभ्युपगमवादेन प्रवृत्तम्, नतु एकस्य मायिकत्वमपरस्यामायिकत्वमिति वैधर्म्यनिरूपणेन । अन्यथा श्रीभाष्यकाराणामप्युभयेषामपीश्वरसृष्टत्ववादिनां वैधर्म्यमेव न स्यात् इति, 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रमनुपपन्नं स्यात् । अतश्च वैधर्म्यं मायिकत्वमुभयं च सूत्रकाराभिमतं व्यावहारिकत्वप्रातिभासिकत्वरूपमेव पर्यवस्यतीति सूत्रकाराणामद्वैतस्वारस्यमवचनसिद्धमेव । एतेन—'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रविरोधोऽपि स्वाप्निकपारमार्थिकतायामिति—सूचितम् । अत एव—'सूचकश्च हि श्रुतेराचक्षते' इति सूत्रं सफलं भवति। श्रीभाष्यमते तु स्वाप्निकानामीश्वरसृष्टानां पारमार्थिकानामर्थक्रियाकारित्वाभावशङ्कैव नोदेतीति, व्यर्थमिदं सूत्रम्। मायिकत्वमारम्भणाधिकरणेनैव सत्यं साधितम्, परंतु तदनुमोदितं व्यावहारिकसत्यत्वमपि नास्तीति सूचनार्थमधिकरणान्तरमिति न दोषः । अनेन चेदमेव सूच्यते - यत् स्वाप्निकानां प्रातिभासिकानामप्यर्थक्रियाकारित्वे मिथ्याभूतानां व्यावहारिकाणां तत्र किमु वक्तव्यमिति । अधिकं तु द्वितीयसंस्करणवेदान्तपरिभाषाभूमिकातोऽवगन्तव्यम् । सर्वथा तु स्वाप्निकानामीश्वरसृष्टतास्थापनं न सूत्रकाराभिमतम् । नह्याविर्भूतस्वरूपस्यापि जीवस्य स्रष्टृत्वसंभवः श्रीभाष्यमते । कारणत्वनियन्तृत्वाद्यतिरिक्तमेव जीवधर्म इति खलु श्रीभाष्यकाराः 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इत्यत्र वदन्ति । व्यक्तं चैतत्—'जगद्व्यापारवर्जमित्यत्रापि ।

'पराभिध्यानात्तु' इति सूत्रसार्थक्याद्युपन्यासः।

सति चैवं सत्यकामत्वादीनामभिव्यक्तत्वं तिरोहितत्वम्, तन्निमित्तसमालोचनं च सर्वमत्र प्रकरणे सूत्रकाराणामसङ्गतमेव स्यात्, अद्वैतमते तु—मायिकत्वे चैतन्यविवर्ततावादस्यैवाभिमतत्वात्, अन्तःकरणोपहितचैतन्यविवर्तता स्वाप्निकानां कथं न भवतीति शङ्कावारणार्थं 'पराभिध्यानात्तु' इति सूत्रमपेक्ष्यते। अनेन च सत्यं जीवब्रह्मणोरभेदः, जीवस्यापि मुक्तदशायामीश्वराभेदात् स्रष्टृत्वादि संभवति, तथापि जीवत्वं तु विरोधानप्रयुक्तं यावदुपाधि व्यावहारिकमेवेति, न तस्य परमात्मनाऽत्यन्ताभेदः। तथाच यस्मात् ततः चैतन्यत एव बन्धो मोक्षश्च, तदज्ञानात् बन्धः, तज्ज्ञानाच्च मोक्षः, तस्मात् तिरोहितं केवलचैतन्यमात्रत्वं पराभिध्यानादेव निर्वर्तते, नतु पूर्वमिति, प्राग् ब्रह्मसाक्षात्कारात् ईश्वराभेदाभावात् न जीवकर्तृकसृष्टिविषयः स्वाप्नप्रपञ्च इति युक्तम्। एतेन—तिरोहितमैश्वर्यं पराभिध्यानादाविर्भवतीत्यर्थवर्णने जीवस्य स्वाप्नपदार्थस्रष्ट्र्युपयुक्तैश्वर्यतिरोधायक एवोत्कटजिज्ञासोदयेन तदनभिधानेऽनावश्यकवक्तव्योक्तिदोषप्रसङ्ग इति शङ्का—परास्ता। इदं हि सूत्रं जीवस्य स्वाभाविकमपहतपाप्मत्वादिकमादाय स्रष्टृत्वशङ्कावारणपरमिति मतद्वयसम्मतमिदम्। अत्र श्रीभाष्यकाराः—अपहतपाप्मत्वादिकं यद्यपि स्वाभाविकम्; तथापि परमात्मसंकल्पात्तिरोहितमिति—व्याचक्षते। अद्वैतिनस्तु—पराभिध्यानात्, परसाक्षात्कारानन्तरं हि जीवस्य ब्रह्मभावः, ततः पूर्वं तु तत्तिरोहितम्, इत्येवं व्याचक्षते। अयमेव भावो भगवत्पादैः—तत्पुनस्तिरोहितं परमेश्वरमभिध्यायतः कस्यचिदेवाविर्भवति 'इति वाक्येन बोध्यते।

पराभिध्यानात्तु सूत्रस्याद्वैताभिमतयोजना,
तस्या एव युक्तत्वं च।

एवं चेयमत्र सूत्रयोजना—तिरोहितं तदपहतपाप्मत्वादिकं पराभिध्यानानन्तरमेव भवति; यतः, परमात्माधीनावेव बन्धमोक्षाविति, नात्राध्याहारलेशोऽपि। अत्र तिरोधानमन्यस्य बन्धसाधनमन्यस्य ध्यानं मुक्तिसाधनमिति भ्रमवारणार्थं 'ततो ह्यस्य बन्धविपर्ययावि'ति सूत्रांशः। तेन च सत्यमीश्वर एव बन्ध-

मोक्षोभयकारणम्, तथापि तस्याज्ञायमानतया बन्धसाधनत्वम्, तद्विपर्यये साक्षात्कारे तु बन्धविपर्ययसाधनत्वमिति — विपर्ययशब्दप्रयोगेण साधयति। श्रीभाष्यसंमते तु विवरणे ईश्वरसंकल्प एवोभयत्र कारणमिति विवक्षायामीश्वरस्य वैषम्यनैर्घृण्यदोषापत्तिरपि प्रथमं संभाव्यते इति तद्वारणार्थमाराधितेश्वरसंकल्पो मोक्षकारणमनाराधितेश्वरसंकल्पो बन्धकारणमित्यध्याहारदोषोऽपरिहरणीय एव।

परामिध्यानस्य तिरोभावहेतुत्वायोगः, परामिध्यानस्य
परकर्मकामिध्यानरूपत्वस्यैव श्रौतत्वं च।

यत्तु— परामिध्यानात्तु' इत्यत्र परामिध्यानस्य तिरोधानं प्रति हेतुत्वं श्रुतम्, न त्वाविर्भावं प्रति। ततश्च परकीयव्याख्याने श्रुतहानमश्रुतार्थकल्पनमध्याहारश्चे'ति मार्तण्डोक्तम्,तत्रास्मदीयव्याख्यानदृष्ट्या तिरोहितमनूद्य परामिध्यानानन्तरत्वस्यैव विधानमभिप्रेतम्, यतो ब्रह्माभिन्नत्वात् कथं न जीवस्रष्टृत्वमिति शङ्कैवात्र वर्तते, नतु तिरोधाननिमित्तं किमिति। बहुशो हि पूर्वाध्यायादौ जीवपरमात्मनोर्विशेषः साधितः सनिमित्तम्। सत्यमद्वैतमतरीत्या कल्पितमंशत्वमनंशत्वं च स्वाभाविकमित्यादिकमपि सूचितम्, तथापि कियत्कालपर्यन्तं जीवस्य तदौपाधिकं रूपम्, कस्यां वावस्थायामभेदोऽत्यन्त इति विवेचनं सूत्रकारा इदानीमेव निरूपयन्ति। एवं च यावत्स्वप्नाद्यवस्था, तावज्जीवस्य जीवत्वम्, साक्षात्कारानन्तरं तु न स्वप्नाद्यवस्था,नवा जीवत्वमिति सूत्राशय इति फलति। 'ततो ह्यस्य बन्धविपर्ययौ'वित्यस्य हि वाक्यस्यार्थः -ईश्वरादेव व बन्धो मोक्षश्चेत्येव; यत ईश्वर एव बन्धमोक्षोभयकारणमिति—'प्रधानक्षेत्रज्ञपतिर्गुणेशास्संसारमोक्षस्थितिबन्धहेतुरि'ति श्वेताश्वतरोपनिषदि प्रतिपाद्यते। श्वेताश्वतरोपनिषद्धि हि—'संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' इति प्रकृत्यविवेकनिबन्धनं बन्धनमभिप्राय—'पृथगात्मानं प्रेरितारं च मत्वे'ति प्रकृतिपुरुषविवेकज्ञानात मोक्ष इति प्रतिपादनात् आत्मैव प्रकृतिसंयुक्तोऽविद्ययाऽऽवृत इति यावत बन्ध हेतुः, स एव च विविक्ततया ज्ञायमानो मोक्षहेतुरित्युपक्रमेण प्रवर्तते। अनेनायमेवार्थोऽवगम्यते—यत् केवलं चैतन्यमात्मस्व-

रूपं प्रकृतिसम्बन्धात् जीवभावमापन्नमज्ञादिपदवाच्यमनीशतां गच्छति, चैतन्यं तु तद्विविक्तमीशंभावम् । तदुक्तम्—'क्षरं प्रधानममृताक्षरं हरः क्षरात्मा नावशिते देव एकः' इति । अत्र चोपनिषदि मध्ये 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ।' 'इति बन्धविपर्ययः पूर्वोक्तात्मस्वरूपविज्ञानप्रयुक्ततदात्मभावेनेति स्पष्टमवगम्यते । इदमेव वाक्यम् — 'पराभिध्यानात्तु' इति सूत्रेऽपि प्रत्यभिज्ञायत इति पराभिध्यानशब्देन परकर्मकध्यानमेव विवक्ष्यते, नतु तत्कर्तृकः संकल्पविशेषः । अनन्तरवाक्ये हि—'ज्ञात्वा देवं सर्वपापप्रहाणिः । क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।' इति स्पष्टमेव तत्कर्मकसाक्षात्कार एव तदभिध्यानपदार्थ इति विज्ञायते । ततश्चायमेवार्थः उपसंहारेऽपि—'प्रधानक्षेत्रज्ञपतिर्गुणेश' इति वाक्येऽपि विवक्षणीय इति, तेन वाक्येन परमपुरुषाज्ञान-तदभावयोरेव बन्धमोक्षहेतुत्वं परमात्मनः प्रतिपाद्यत इति वक्तव्यम्, नतु तत्संकल्पविशेषसाध्यौ बन्धमोक्षाविति ।

अज्ञान-ज्ञानद्वारेश्वरस्य बन्धमोक्षहेतुत्वे फलमत उपपत्तेरिति सूत्राविरोधः ।

एवं वदन्तोऽपि वयम्—'फलमत उपपत्तेरि'ति सूत्रसिद्धं प्रसादादिद्वारेश्वरस्यैव तत्तत्कर्मफलदातृत्वमिति सिद्धान्तं तु न सूत्रकारानभिमतं वदामः । अयमत्र विवेकः—तत्तत्कर्मफले उपासनाफले चेश्वरः प्रसादद्वारा कारणम्, बन्धमोक्षयोस्तु तदज्ञान-तद्विज्ञानाभ्यामेव स हेतुरिति । एवंच न विरोधलेशस्याप्यवसरः । एतेनेदमपि निगदव्याख्यातम्—यत्—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
मत्प्रसादात् परां शान्तिं मत्स्थां प्राप्स्यसि शाश्वतीम् ॥

इत्यादि सगुणोपसनादिकमैवाक्याभिप्रायम् , ज्ञानमात्रेण मुक्तिप्रतिपादकानि तु पूर्वोक्तपरमात्मविषयाणीति । एतेन—यथा लौकिकेश्वरः ईशितव्यचेतनस्य कोपप्रसादद्वारा बन्धमोक्षहेतुर्भवति, तद्वदयं जगदीश्वर इति प्रतीयते । अनेन चेश्वरस्य क्षेत्रज्ञबन्धमोक्षहेतुत्वं तत्तदनुगुणप्रवर्तनेनेति लभ्यते ।

अयमर्थो भगवद्गीतासु स्पष्टमुपदिष्टः—तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि'' इत्यादिनेति परोक्तिरपि निरवसरेति—सूचितम्।

परामिध्यानसूत्रस्य ज्ञाननिवर्त्यत्वाप्यमिथ्यात्वतात्पर्यकत्वम्।
भेदव्यपदेशादिसूत्रोपपत्तिश्च।

पराभिध्यानशब्देन च फलाभिमुखस्य ध्यानस्य साक्षात्कारपर्यवसायिताया एव विवक्षणात् श्वेताश्वतरीयवाक्यशेषवशात् ज्ञाननिवर्त्यत्वमेव बन्धस्य प्रतिपाद्यते, नतु तत्सत्यत्वम्। अत्र स्वाप्निकप्रपञ्चमायिकत्वस्थापनावसरे जागरितप्रपञ्चसाधारणबन्धस्येश्वरज्ञाननिवर्त्यत्वमिति, श्वेताश्वतरोपनिषत्प्रत्यभिज्ञानेनेदमपि सूच्यते—यदधिष्ठानस्वरूपाज्ञानमात्रप्रयुक्ताः स्वाप्निका व्यवहारदशायामपि बाध्यन्त इति विशेषे सत्यपि बाध्यत्वमात्रेण न विशेषस्तेषां परस्परमिति। 'अधिकं तु भेदनिर्देशात्' इत्यादीनां न श्रीभाष्यमते स्वारस्यम्, किन्त्वद्वैत एवेति पूर्वमेवोक्तत्वात् जीवात्मभेदमेव सूत्रकाराभिमतं कृत्वा तत्र तत्र सुदूरमाक्रमणं परेषां नास्माभिः पुनरपि समालोच्यते। स्वरूपैक्यमेव जीवेश्वरयोः शास्त्रार्थः सूत्रकाराभिमतश्चेति बहुशोऽन्यत्र प्रतिपादितम्।

'आत्मेति तूपगच्छन्ती'ति सूत्रस्याद्वैत एव स्वारस्यम्।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'ति सूत्रमपि तत्र प्रमाणमिति सांप्रतमुपपादयामः। इदं हि सूत्रं ब्रह्म तत्र तत्र ज्ञेयतया निर्दिष्टमहंरूपेण ग्रहीतव्यमिति बोधयतीति मतद्वयसंप्रतिपन्नोऽयमर्थः। इयान् विशेषः—यत् श्रीभाष्यकाराः स्वात्मतया स्वनियन्तृत्वेन ब्रह्मानुसन्धातव्यमिति मन्यन्ते, अद्वैतिनस्तु स्वस्वरूपत्वेनेति। तथाचात्रात्मशब्दः स्वरूपवाच्युत स्वान्तर्यामिवाचीति विचारः कर्तव्यः। वयं तु प्रतीमः यत् श्रीभाष्यमते परमात्मनः सर्वनियन्तृत्वेन सर्वशरीरकत्वस्य तत्तद्वाक्यसिद्धत्वात् पृथक् स्वशरीरितयोपासनव्यवस्था विफलेति, स्वस्वरूपतया ब्रह्मानुसन्धानमेव सूत्रार्थहृदयमिति। अत्र हि ब्रह्म जीवश्च स्वरूपत एकमिति सूचनं मुख्यं फलं सिध्यति। तथाच स्वरूपैक्यनिबन्धनमेव वामदेवादीनामिन्द्रादीनां वा ब्रह्मण्यहंशब्दप्रयोग इत्यपि

सूचितम् । ''न वक्तुरात्मोपदेश' इति चेन्नाध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति सूत्रे वक्तुरात्मा नोपदिश्यते, 'मामितो'न्द्रोपदिष्टो न तस्यात्मा, किन्तु केवलात्मेति यत् बोध्यते सूत्रकारैस्तदिदम्—उपासितुरात्मान्तरं न कुत्रापि ज्ञेयमिति स्पष्टमेव बोधयति । तथाचाहं ब्रह्मास्मीत्यादि स्वरूपैक्यनिबन्धनमेव । श्रीभाष्यमते 'मामुपास्वे'ति इन्द्रेणापि तस्यैवात्मोपदिश्यत इति कथं न वक्तुरात्मेति निषेध उपपद्यते ?

जीवब्रह्मणोः स्वरूपैक्ये शास्त्रतात्पर्यम् ।

न हीन्द्रोऽतत्त्ववित्, येनातत्त्वविदामिवाहंदृष्टिरिन्द्रस्यापि स्वात्ममात्रविषयिणीति कल्पनाया अवकाशः । अध्यात्मसम्बन्धानां बहूनामाम्नानं च यदुपक्षिप्तम्, तत्र निखिलचेतनाचेतननियन्तृत्वादिकमेव खलु धर्मजातमुपक्षिप्तम्, नतु स्वशरीरित्वादिकमसाधारणमिति,स्पष्टमिदं विज्ञायते—यत् सर्व-नियन्तृतया सर्वकारणतया चाभिमतं परमात्मस्वरूपं स्वरूपत एव स्वाभिन्नमिन्द्रादिभिर्मन्यते,नतु स्वशरीरित्वनिबन्धनमिति । परमात्मा ह्यत्र सर्वकारणत्वादिनैवोपक्षिप्यते । स्वरूपचैतन्यमेवात्मेन्द्रस्य पारमार्थिक इति शास्त्रोपदेशतो विज्ञायत इति, समुचितमेव सूत्रकारा अपि शास्त्रदृष्ट्या जीवब्रह्मणोः स्वरूपैक्य एव तात्पर्यमिति गमयन्ति । सत्यं भेदोऽपि श्रुतिभिः प्रतिपाद्यते, अभेदोऽपि ; तथापि षड्विधतात्पर्यलिङ्गोपेताभेदश्रुतेरेव प्राबल्यात् अभेदश्रुतिप्रार्थितस्वनिषेध्यभेदसमर्पणपरतया भेदश्रुतीनां सार्थक्यान्न दोष इति—'अद्वैतिनामभेदे नियामकाभावेनाभेदसिद्धान्तायोग' इत्यपि परोक्तिः...परास्ता । अपृथक्सिद्धविशेषणत्वेनैवाहंप्रतीतिविषयत्वं शरीरादीनामिति तु कल्पनामात्रम्, इदं रजतमित्यादौ आरोपेणेवात्रापि शरीरस्य आत्मन्यारोपनिबन्धन एवाभेदप्रत्यय इति कल्पनैव हि युक्ता । नहि चेतनशरीरयोः द्रव्यगुणभावः, क्रियाक्रियावद्भावोऽवयवावयविभावो वा, येन तद्वदविनाभावनिबन्धनोऽभेदप्रत्ययनिर्वाहः स्यात् । तथाच स्वरूपैक्यनिबन्धन एवाहंभावो ब्रह्मणीत्येवोक्तसूत्रार्थ इति नोत्क्रमणापेक्षा तत्रेत्येवानेनापि सूत्रेण सूच्यते । एतेन—अत्र ह्युपासने परमात्मा स्वशरीरकत्वेनैवोपास्यते इति परोक्तिरपि बाधितेति—सूच्यते । तदिदं

सिद्धं यत् जीवब्रह्मणोः स्वरूपैक्यनिबन्धन एवैक्यव्यपदेश इत्येव सूत्राशय इति। पूर्वोपपादितानामेव पुनरप्युपपादनं तु मार्ताण्डकारानुकरणमेवेति न दोषः।

पूर्वोक्तार्थ संक्षेपः।

सति चैवं सूत्रकाराः जीवेश्वरस्वरूपैक्य-स्वाप्निकमायिकत्व-जागरितादिविवर्तत्व-केवलब्रह्मकेवलप्रपञ्चकार्यकारणभाव-ब्रह्मभावोत्क्रमणनिरपेक्षमुक्ति-पाञ्चरात्रादिमतनिरास-ब्रह्मगतनिर्विशेषत्वाख्यैकलिङ्गविवक्षाद्यद्वैतासाधारणप्रक्रिया-विशेषव्यवस्थापनात्, नित्यधर्मभूतज्ञान-चिदचिच्छरीरकब्रह्मकार्यकारणभाव-ज्ञानमात्रप्रमात्व-भगवत्प्रसादसाध्यमुक्तिवाद- देशविशेषावच्छिन्नसायुज्यवादादि-श्रीभाष्यासाधारणप्रक्रियाणामसमर्थनाचाद्वैतमेव स्वाभिमतं मन्यन्ते। 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'इत्यादीनां केवलब्रह्मोपादानतापराणामत एवोपपत्तिः। 'आत्मकृतेः परिणामात्' इत्यात्मन एव करणं यत् प्रतिपादितम्, तदिदं प्रकृतिद्वारकब्रह्मपरिणामपक्षेऽनुपपन्नम्। आत्मकरणं च तदात्मना भावेन विवर्तरूपेणैवेति परिणामपदमत्रत्यं तद्भावमात्रपरमिति, केवलब्रह्मपरिणामवादे सूत्रकाराणां न तात्पर्यमिति मतद्वयसम्मतम्, इयान् विशेषः—परिणामवादे सविकारेऽवान्तरतात्पर्यं व्यवहारदृष्ट्येत्यद्वैतमतम्, श्रीभाष्यमतं सर्वथा न ब्रह्म केवलं परिणामिकारणमिति,। इदं चात्मकृतेरिति सूत्रविरुद्धमेव, अद्वैतदृष्ट्या तु न विरुद्धम्। विवर्तवादस्त्वेकसत्तावादाभिप्रायेणेत्यादि पूर्वमेव विवेचितम्। इदं तु प्रातिभासिकत्वं ब्रह्मप्रमातिरिक्तबाध्यत्वम्, इत्यभिप्रायेण। आगन्तुकदोषजन्यत्वं तदिति स्वीकारे तु सत्तात्रयवाददृष्ट्यापि विवर्तवाद इत्याद्यन्यत्र व्यक्तम्। अत एव—'ब्रह्म वेद ब्रह्मैव भवति' इति मुक्तानां ब्रह्मभावोपपत्तिः। ब्रह्मभावोऽयं तु प्रत्यगात्मभाव एवेति—'आत्मा प्रकरणादि'ति सूत्रेणापि बोध्यते। ततश्च परमं साम्यं ब्रह्मणा जीवस्य ब्रह्मभाव इत्येव सूत्रकाराशयः।

परमसाम्यं न भोगमात्रसाम्यमिति व्यवस्था।

'निरञ्जनः परमं साम्यमुपैती'ति साम्ये परमविशेषणं तु श्रीभाष्यमते नि-

रर्थकम् । एतेनेदमपि व्याख्यातम्—यत् 'भोगमात्रसाम्यलिङ्गाच्चे'ति न परममुक्तपरम्, किन्त्ववान्तरमुक्तपरमेव । अत एव—'भोगमात्रे'ति सूत्रे साम्यपदमेवाम्नायते, न परमसाम्यम् । सत्यं 'यदा पश्यः पश्यते रुक्मवर्णमि'ति सविशेष एवाम्नायतेऽनुपदम् , तथापि तद्दर्शनसमनन्तरस्वरूपसाक्षात्कारवत एवात्र विवक्षा । अत एव 'तदा विद्वानि'ति पुनर्विद्वत्पदप्रयोगः सफलो भवति । अनेन च सगुणोपासनेन साम्यमात्रेऽपि परमसाम्यं तत्त्वसाक्षात्कारमात्रसाध्यमेव बोध्यते । एतेन—विशिष्टब्रह्मवेदनं विधाय 'परमं साम्यमुपैति' इति विधानात् परमसाम्यं सगुणवेदनस्यैव फलम्, परमसाम्यशब्दश्च सादृश्यमात्रपर इति परोक्तिरपि न सूत्राक्षरानुगुणेति—व्याख्यातम् ।

पूर्वोपपादितमहाभारततात्पर्यं संग्रहः, विष्णूत्कर्षं ,
सूत्रकारानारायश्च ।

यथाच महाभारतीयमोक्षपर्वापि सम्यगेव समालोच्यमानमद्वैतमत एव स्वरसम्, 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतो मुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ।' इत्यादीनि वाक्यानि च न त्रिमूर्त्यन्तर्गतविष्णुगोचराणि,तथा पूर्वमेव विवेचितम् । नहि महाभारतमात्मबहुत्वाभिप्रायम्, किन्तु तदेकत्वपक्षाभिप्रायमेव, नह्यहम्भाव आत्मस्वरूपान्तर्गत इत्यादिकमपि पूर्वमेवोपक्षिप्तम् । स्वयमेव भगवान् रुद्राख्यनारायणमेव स्वान्तरात्मानं स्वप्रत्यगात्मस्वरूपं वा मन्यत इति हि महाभारते व्यक्तमिति, 'सर्वाणि वेदवाक्यानि ब्रह्मसूत्राणि वा शिवनिषेधेन विष्णुप्राधान्यपराणी'ति मार्तण्डविवरणमिदं चिन्त्योपपत्तिकमेव । नारायणब्रह्मतावादो हि न सूत्राक्षरानुगुणः । नहि कुत्रापि सूत्रे नारायणपदं वर्तते ।

'ईक्षतेर्नाशब्दमि'ति सूत्रस्य मार्तण्डाभिमतं योजनं पाराशर्यविजयकारैः 'इतरे तु' इति पक्षोपपदनावसरे सत्यमुपक्षिप्तमिति नेयमपि परमार्थगत्या मार्तण्डकाराणां स्वकपोलकल्पनैव । परन्तु ईक्षितृत्वस्य देवतान्तरव्यावर्तकत्वाभावात् आशब्दम्, ना इति योजनं पाराशर्यविजयकारैरेवान्ते इतरपक्षनिराकरणावसरे खण्डितमिति नास्माभिः पुनरपि तत्र व्याप्रियते । अत्र हि प्रकरणे 'आदिरुद्राख्यमदिविष्ण्वाख्यं च न जगत्कारणमिति योजनं न सूत्राक्षरानुगुण-

मि'ति वदन्तः पराशर्यविजयकाराः आदिब्रह्मणो रुद्रपदवाच्यत्वे विष्णुपदवाच्यत्वे वा नाग्रह इति स्पष्टं विवेचयन्ति। अयमेव चाशयो व्यासतात्पर्यनिर्णयकारैरपि द्वितीयपरिच्छेदे विशदमुपपादित इति किमिति विद्रोहो व्यासतात्पर्यनिर्णयविरोधेन शिवद्रोहतात्पर्यमात्रपर्यवसायिना। कारणस्य चेतनत्वसमर्थन एवास्य सूत्रस्य तात्पर्यमिति हि तदीयो निर्णयः। ततश्च नापदेनापि चेतनविवक्षैव तदभिमता, नतु नारायणपरता रुद्रपरतानिषेधेनेत्यप्यन्यत्र विस्तृतम्।

एतेनात्मैकत्ववादोऽपि व्याख्यातः। सम्मतमिदं मार्तण्डकाराणामपि—कापिला हैरण्यगर्भाश्चोभयेपि प्रधानभूतं कंचित् पुरुषं नेच्छन्ति, अतः बहूनां पुरुषाणामेकयोनित्वेनोच्यमानं पुरुषमाख्यास्यामीति प्रतिज्ञाय, वक्ष्यमाणार्थे पुरुषसूक्तं प्रमाणमिति सूचयित्वा, कापिलादिभिरध्यात्मशास्त्रप्रवर्तकैर्यथायथमुक्तम्, व्यासेन तु पुरुषात्मैक्यमभिहितमि''ति वदताम्। इदमेवात्रालोचनीयम्—यत् सांख्यादिभिर्यस्यात्मनो बहुत्वमभिमन्यते, तस्यैवैकत्वं किं मोक्षपर्वाभिमतम्, उतान्यस्येति। द्वितीये तु पक्षे 'बहवः पुरुषा राजन्नुताहो एक एव तु'इति विकल्पो नोपपद्यते। एकविषयत्वे खलु विकल्पः। एतेन—'को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते'इति प्रश्नान्तरमपि—व्याख्यातम्। अयमस्याशयः—यत् बहुपुरुषत्वे एकपुरुषत्वे वा श्रेष्ठत्वं कस्य? कस्य च योनित्वमिति? एकपुरुषतावादिभिरपि हि आत्मभेदस्तु सुखदुःखादिव्यवस्थासिद्ध्यर्थमवश्यमूरीकर्तव्य एव, तत्र च योनिभूतः पुरुषः एकः, अपरेतु तत्कार्यभूता इति वक्तव्यम्। सति चैवं को वा स योनिभूतः पुरुष इति 'को वा योनिरिहोच्यते' इति प्रश्नतात्पर्यम्। तथाच बहुपुरुषवादे श्रेष्ठताप्रश्नः, एकपुरुषतावादे योनिप्रश्न इति फलितम्। योनिशब्दो हि कारणपरोऽधिष्ठानस्वरूपमेव गोचरयतीति नेदं स्वतन्त्रं प्रश्नान्तरम्। अत एव—'को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते।' इति प्रश्नेऽपि 'अत्रे'ति, 'इहे'ति च निर्देश उपपद्यते? अनेन हि पुरुषबहुत्वैकत्वप्रश्नयोरेवावान्तरं प्रश्नद्वयमनेन वाक्येन क्रियत इत्येव प्रतीयते इति,—'न केवलमात्मैकत्वबहुत्वमात्रविषयः प्रश्नः, किं तर्हि? जगदुपादानकारणपुरुषविशेषविषयोऽपि' इति परकीया कल्पनापि—निरवसरैव।

अस्यां हि कल्पनायां व्यासाभिमत पुरुषबहुत्ववादस्य सर्वेषां च जीवानामेकमुपादानकारणमित्यत्रैव पर्यवसानम्। तत्र च 'बहवः पुरुषा लोके साङ्ख्ययोगविचारणे' इति पुरुषबहुत्ववादस्य व्यासनिरस्यसाङ्ख्याभिमतत्वोक्त्यनुपपत्तिः। 'समासतस्तु यद् व्यासः' इति व्यासमतस्य साङ्ख्ययोगमतविलक्षणत्वं हि प्रतिपादितमेव। एतेन—सूत्रकारैः कथमात्मबहुत्ववादो न खण्डित इति शङ्कापि – परास्ता। योनिपदेन प्रश्ने जगदुपादानप्रश्नः, उत्तरे तु जीवानामेवानुपपन्नोपादानव्यवस्थापनानुपपत्तिः। जीवा हि तद्बहुतावादे साङ्ख्याभिमतेऽनुपपदमुपपादिते न जन्या इति न तेषामुपादानोपादेयभावसंभवः।

इदमेवात्र पृच्छ्यते—यत् साङ्ख्याभिमतं जीवस्वरूपमभिप्रेत्य यदि बादरायणाचार्या अत्र तदुपादानकरणं प्रतिपादयन्ति, तर्हि कथं जीवकर्तृत्व-सार्वदिकतदहंप्रतीतिविषयत्व-तदणुत्वादीनां बादरायणाभिमतत्वम्? साङ्ख्याभिमतात्मबहुत्वं तु नात्र बादरायणाचार्यप्रतिपाद्यमिति, तद्बहुत्वानुवादेनोपादानोपादेयभावानुपपत्तिरिति, साङ्ख्यानभिमतं पुरुषैकत्वं प्रथमतः प्रसाध्य,व्यवहारसिद्धजीवभेदस्यापि स्वीकारेणात्रत्यसन्दर्भप्रवृत्तिरित्येव महाभारतार्थ इति, योनिशब्दार्थोऽत्राधिष्ठानमित्येव स्वीकर्तव्यमित्यधिष्ठानविषयक एवात्र प्रश्नः। पुरुषैकत्वमुक्तवानिति पाठे मार्तण्डकाराभिमते तु विवरणे साङ्ख्यमतात् व्यासमतस्य स्वतन्त्रपरतन्त्रतयोरेव विशेष इत्येव कल्पनात् आत्मविभुत्वादिकं व्यासाभिमतं कथं न श्रीभाष्यकारैरप्यसाधनोपमित्यपि प्रश्नोऽसमाधेय एव। अयं च प्रश्नः स्वरूपचैतन्यविषयकत्व एवोपपद्यते। साङ्ख्ययोग्यादिभिः सार्कं तद्रूपस्य जीवस्यैव भेदमात्रे विवादो वर्ततेऽध्यात्मशास्त्रेषु। योनिपदेन परमात्मस्वरूपविवक्षायां तु बहुत्वैकत्व संख्यामात्रविप्रतिपत्तिनिरूपणमत्रासङ्गतमेव स्यात्। अत एव—

> उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः।
> अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत॥
> समासतस्तु यद् व्यासः पुरुषैकत्वमुक्तवान्।
> तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः' ॥

इति व्यासाभिमतं पुरुषैकत्वमेव साङ्ख्यादिप्रतिद्वन्द्वितया प्रतिपादनीयं प्रतिज्ञायत इत्युपक्रमस्वारस्यं परमार्थगत्यैकजीववाद इति च सिद्ध्यति । समाधानावसरेऽपि ।

'शृणु पुत्र यथा ह्येषः पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥
क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभम् ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥
चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तराम् ।
तस्यैकत्वं महत्वं च स चैकः पुरुषः स्मृतः ॥
महापुरुषशब्दं स बिभर्त्येकः सनातनः ।

इति जीवस्यैव क्षेत्रज्ञादिपदवाच्यत्वनिमित्तनिरूपणपूर्वकमेकत्वं स्वरूपतः, उपाधितश्च बहुत्वं च प्रतिज्ञायते । गुणसम्बन्धकृतमेव बहुत्वम्, वस्तुगत्या तु निर्गुणत्वेनैव तस्यैकत्वमिति वाक्यशेषेण विशदमवगम्यते । सोऽयमत्र वाक्यशेषः—

एको हुताशो बहुधा समिद्ध्यते,एकः सूर्यस्तपसो योनिरेका ।
एको वायुर्बहुधा वाति लोके, महोदधिश्चाम्भसां योनिरेका ॥
पुरुषश्चैको निर्गुणो विश्वरूपस्तं निर्गुणं पुरुषं चाविशन्ति ।
हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ॥
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः' ॥

इति सन्दर्भ उपपद्यते । अनेन हि विशदमिदं ज्ञायते—यत् गुणानां त्यागेनैव निर्गुणत्वं पुरुषस्येति, कल्पितमेव सगुणत्वं बहुत्वं च जीवस्येति । अयं च पुरुषो यदि परमात्मा, तर्हि तु गुणत्यागादिना निर्गुत्वादिवर्णनमनुपपन्नमेव स्यात् । अतोऽपि ज्ञायते—नायं परमात्मपरः प्रश्नोत्तरसन्दर्भ इति, मध्यतनपरामर्शोऽपि पारमार्थिकजीवैकत्वविषय एव ।

उपसंहारस्तु—

एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।

एकात्मानं तथाऽऽत्मानमपरेऽध्यात्मचिन्तकाः ॥
तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः' ॥

इति परमात्मैकत्वप्रतिपादनपर इव प्रतीयते, परन्तु एकं हि परमात्मानमिति ईश्वराङ्गीकर्तृयोगिमतमनूद्य—'एकात्मानं तथात्मानमपरेऽध्यात्मचिन्तका' इति जीवात्मनामेकात्मस्वरूपत्वमेव, न ततो भेद इति, यद्वजीवानां स्वरूपतश्चैतन्यतो न नानात्वम्, किन्त्वैक्यमेवेत्येव बोध्यते । सति चैवं पूर्वं महापुरुषादिशब्दशब्दित-निर्गुण-स्वरूप-चैतन्यमेव नारायणादिपदबोध्यमपि निरूपितं भवति । यतः सर्वेषां नराणामयनमधिष्ठानमित्येव "स वै नारायणो ज्ञेय इत्यादिवाक्यानामपि तात्पर्यमित्यूरीकर्तव्यम् ।

अयं भावः—एकमेव शुद्धचैतन्यं सर्वाधिष्ठानत्वादेकः परमात्मा, कर्मबन्धादिसम्बन्धात्तु जीवो बहुविधश्च भवतीत्येवोक्तसन्दर्भतात्पर्यम् । व्यक्तं चैतदनन्तरेण वाक्यशेषेणापि—

स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते च सः ।
एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥

इत्याकारेणोपसंहारगतेन । इदं हि प्रकरणं साङ्ख्ययोगिमतेन व्यासमतस्यात्मस्वरूपे विशेषनिरूपणार्थमेवेति,पुरुषसूक्तानामप्यद्वैत्यभिमतैकात्मत्वादमेव बादरायणाचार्या मन्यन्त इति गम्यते । सर्वपुरुषाधिष्ठानैकपुरुषनिरूपणपराणि सूक्तानि पुरुषसूक्तानीति स्पष्टमत्रैव प्रकरणे महाभारते ।

यत्तु व्यासोक्तं तु पुरुषैकात्म्यमेव, तच्चैकेन पुरुषेण विशिष्टत्वमि''ति परेषां विवरणम्, तदिदं पुरुषैकत्वस्यैव व्यासमतत्वस्यावगमात् पुरुषैकात्म्यशब्दस्य चात्र प्रकरणेऽभावात् न व्यासाशयवर्णनम् । कुत्रचन तादृशपाठ दर्शनेऽपितु पुरुषस्यैकात्मत्वं पुरुषैकात्मत्वमिति षष्ठीसमास एवात्र विवक्षितो न बहुव्रीहि-

समासः; यतः पूर्वोक्तरीत्या प्रश्नस्य पुरुषैकत्वविषयकत्वमेवोक्तप्रकरणस्थस्येति स्वरसत एवावगम्यते ।

मुक्तेर्गतिनिरपेक्षत्वे महाभारताविरोधः ।

मुक्तिस्वरूपमपि व्यासाभिमतं निर्गुणात्मतया भवनमेव, न गत्यागतिसाध्यमिति—

हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥

इति वाक्येनावगम्यते । एतेन—अप्राकृतदेशविशेषावस्थिततत्प्राप्तिपूर्वकतत्सायुज्यप्राप्तिरेव मोक्षपुरुषार्थ इति महाभारतनिर्णय इति परोक्तिरपि बाधितेति—सूचितम् । सत्यं 'मोक्षपर्वणि सप्तचत्वारिंशदधिकत्रिशततमाध्याये शुकं प्रति व्यासवचनम्—

विद्यया तदवाप्नोति यत्र गत्वा न शोचति ।
यत्र गत्वा न म्रियते यत्र गत्वा न जीर्यते ॥

इति स्थानविशेषप्राप्तिविद्याफलम्'' इति गमयति, परन्तु विद्यापदार्थोऽत्र निवृत्तिमार्गः सन्यास एव, न तत्त्वसाक्षात्कारः । अत एव—

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया याति कां दिशं याति कर्मणा ॥

इति शुकप्रश्ने—

प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः ।
कर्मणा बद्ध्यते जन्तुर्विद्यया च प्रमुच्यते ॥

इति निवृत्तिमार्गस्यैव प्रक्रम उपपद्यते । एतेन—"एतद्वै ब्रह्मणः स्थानं जापकस्य महात्मनः । तत्रस्थं परमात्मानं ध्यायन् वै सुसमाहितः । हिरण्यगर्भसायुज्यं प्राप्नुयाद्ध नृपोत्तम । आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचती'ति मोक्षपर्वणि १९८ तमाध्यायगतमपि वाक्यम्—व्याख्यातम् । एतद्धि जापकानां हिरण्यगर्भलोकदृष्ट्या लोकप्राप्त्यादिकं बोधयत् कार्यब्रह्मण एव गतिप्राप्यत्वमित्यद्वैतसिद्धान्तस्यानुगुणम्, उत व्याससिद्धान्तमार्तण्डस्येति तदीया

एव पश्यन्तु। अनेन प्रकरणेन हिरण्यगर्भलोकदृष्ट्या लोकपालेन्द्रादित्यादिलोकस्याप्रकृष्टत्वमेव बोध्यते, गतिप्राप्येषु लोकेषु, नतु ब्रह्मसाक्षात्कारवतां मुक्तिरपि गतिसापेक्षेति, नेदमपि प्रकरणं परेषामनुकूलम्।

यत्तु—"मोक्षपर्वणि ३०७ तमाध्याये—'शृणु मे त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम्। विदितं यतिभिस्सर्वैः कपिलादिभिरीश्वरै'रिति सांख्यं ज्ञानं प्रस्तुत्य प्रकृतिपुरुषविवेकिनो ज्ञानिनोऽधिकृत्य "तरन्ति मुनयः सिद्धा ज्ञानयानेन भारत। तीर्त्वाऽतिदुस्तरं जन्म विशन्ति विमलं नभः। तत्र तान् सुकृतीन् साङ्ख्यान् सूर्यो वहति रश्मिभिरि'त्यादिनोपक्रान्तं 'सत्त्वं वहति शुद्धात्मा परं नारायणं परमि'त्यादि वचनजातम्, तदिदं साङ्ख्यदर्शनस्तुतिपरम्, नत्वौपनिषदमतं स्वाभिमतं प्रति। 'एतत्प्रकरणगतम् 'प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम्। परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम्' इति वाक्यमपि साङ्ख्याभिमतनिर्गुणाकर्तृपुरुषप्राप्तिपरमेवेति, कथमनेन प्रकृत्यवियुक्तात्मवेदनस्यैव मोक्षसाधनत्वमभ्युपगच्छतां परेषामानुकूल्यमिति न वयं जानीमः। साङ्ख्याभिमतस्य पुरुषस्यापि नारायणत्वं यौगिकं स्वयंप्रकाशमानत्वेन देवत्वं च न विरुद्धम्, प्रकृत्यतिक्रमणमन्तःकरणाद्यविवेकविच्छित्तिः, आत्मा च स्वरूपमिति, तस्य प्राप्यत्वं तदात्मभाव एवेत्यादि प्रकृतेऽनुसन्धेयम्। स्पष्टं हि व्यासमतं कापिलमततो भिन्नमिति महाभारत एवोक्तमिति, पूर्वमेव विवेचितमिति, नाद्वैतिनां मते कोपि विरोधः।

एतेन—अत्र भक्तियोगेन देहं विहाय परमपदं गच्छतो विदुषः सूर्यप्राप्तिरनन्तरं वायुप्राप्तिरनन्तरं वस्वाद्यधिष्ठातृप्राप्तिरिति, प्रकृतसन्दर्भतात्पर्यं परोक्तमपि—बाधितम्; अस्य साङ्ख्यज्ञानप्रकरणत्वेन भक्तियोगस्यात्राप्रस्तुतत्वात्। 'ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः। तेषां त्वक्षयमध्वानं गच्छतां द्विजसत्तम। सर्वलोकतमोहन्ता ह्यादित्यो द्वारमुच्यते॥' इत्यादि मोक्षपर्वगत ३५४ तमाध्याय वचनान्यपि नारायणमन्त्रजपपरान् शुद्धान्तःकरणानेव विषयीकरोति; नतु तत्त्वज्ञानिनः। अत एव—ताञ्जपैर्विविधैर्मन्त्रान्नारायणगतान् बहून्।' इत्युपसंहार उपपद्यते। अत्र 'विगतपुण्यपापा इति' पुण्यपा-

पोभयविनाशो हि नारायणमन्त्रजपमात्रसाध्य इति, मन्त्रजपस्तुतिरेव विवक्ष्यत इति न दोषः ।

परमात्मनो निर्गुणत्वे महाभारतोपष्टम्भः ।

न हि रूपवान् परमात्मेति श्रीमहाभारतमतम्; येन तस्य मुख्यं प्राप्यत्वमुपपाद्येत । मोक्षपर्वणि ३४७ तमेऽध्याये—

अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ।
निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः ॥
एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ।
इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतां गुरुः ॥
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥

इत्यादीनि हि वाक्यानि—"मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम ।" इति वाक्यानन्तरं प्रवृत्तानीति, मां शब्दनिर्दिष्टं तत्स्वरूपमरूपवदेव युक्तम् । तत्र च प्रवेशः—"जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते" इत्यादि सर्वलयाधारत्ववर्णनानन्तरमेवास्य वाक्यस्य प्रवृत्तत्वादप्ययसंतद्भाव एवेति,—'यत्प्रयन्त्यभिसंविशन्ती'ति श्रुत्यर्थ एव 'मां प्रविश्य भवन्तीहे'ति वाक्येन संगृह्यते । न ह्यन्यः प्रवेशपदार्थस्तत्र संभवति । सति चैवं मुक्तानां 'तानि परे तथा ह्याह ही'ति सूत्रप्रतिपादितब्रह्मभाव एव प्रवेशपदार्थ इति नात्रोत्क्रमणं वाक्यतोऽवगम्यते । एतेन—अत्र 'मां प्रविश्ये'ति वासुदेवप्राप्त्यनन्तरभावित्वं मुक्तेरिति स्पष्टमिति परोक्तमपि—निरस्तम् । तथाच मुक्तेरुत्क्रमणापेक्षेति श्रीभाष्यमतं न महाभारताभिमतमिति सिद्धम् ।

मुक्तेर्ब्रह्मभावत्वे महाभारतोपष्टम्भः

अत्र मुक्तिस्तदात्मभाव एव, नतु तत्साम्यमित्यत्रापि महाभारतमनुकूलमिति पूर्वमुपक्षिप्तमेव । युक्तं चैतत्—भेदाभेदयो र्भेदो नश्वरोऽभेद एव नित्य इति मोक्षपर्वणि ३१० तमाध्याये—

"एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ।
पञ्चविंशतिनिष्ठोऽयं यदा सम्यक् प्रचक्षते ॥
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥

इति वचनैः प्रतिपाद्यत इति, ब्रह्माभेद एव मोक्ष इति गम्यते । तदिदं सिद्धम्...यदज्ञदृष्ट्या भेदः, ज्ञानिदृष्ट्या त्वभेद इति भारतार्थनिष्कर्ष इति । यत्तु—

यदा तु मन्यतेऽन्योऽहमन्य एवमिति द्विजः ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥
अन्यश्च राजन् परमस्तथान्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।

इति मोक्षपर्वणि ३२३ तमेऽध्याये उपक्षिप्तम् , तदिदमपि जीवेश्वरयोः पञ्चविंशकषड्विंशयोरत्यन्तभेदमेव मन्यते , नतु शरीरशरीरिभावम्, एकत्वानुभवो ह्यत्र तत्स्थत्वप्रयुक्त औपाधिक एव, न ह्यत्र पञ्चविंशकशरीरकं षड्विंशं ज्ञेयं निर्दिशन्ति व्यासाचार्याः। निरीश्वरसाङ्ख्यप्रक्रिया ह्येयमिति न तत्कल्पनाया- ऽसाधुत्वमपि । एतेन –'तत्स्थत्वादि'ति वर्णनादत्रापि शरीरशरीरिभावप्रयुक्त- सामानाधिकरण्यमेव विवक्ष्यत इति शङ्कापि—परास्ता । अत्र हि जीवेश्वरयो- र्वस्तुगत्या भेदनिरूपणानन्तरं तत्स्थत्वप्रयुक्तमेकत्वं हि बादरायणाचार्यैः केवलं निन्द्यते । तत्स्थत्वं त्वत्र साङ्ख्याभिमतं तदविविक्तत्वमेव । अत एव 'तेनैतन्नाभिनन्दन्ति' इति वाक्यशेष उपपद्यते । परमार्थतस्तु –तत्स्थत्वादिति षड्विंशपरमात्मस्थत्वात् पञ्चविंश एवैक इत्येवात्र वाक्यार्थ इति नेदं प्रकरणं जीवशरीरतापक्षानुगुणम्, किन्तु जीवस्य शुद्धचैतन्याध्यस्तताबादस्यैवेति हि वस्तुस्थितिः ।

मोक्ष पर्वणि ३१२ तमेऽध्याये—"गुणा गुणेषु लीयन्ते तदैका प्रकृति- र्भवेत्" इति प्रकृतिपुरुषयोरेकत्वमुपवर्णितम्, सत्यं सांख्यप्रक्रियाया एवात्रानुवा- दात् तत्साम्यापत्तिरेव, न स्वरूपैक्यम् । एतदेवाभिप्रेत्योक्तमत्रैव—साम्यमेक-

त्वतां यास्ये यादृशस्तादृशस्त्वहम्। तुल्यतामिह पश्यामि सदृशोऽहमनेन वै। योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान्। ससङ्गयाऽहं निःसङ्गः स्थितः कालमिमन्त्वहम्।'' समानयाऽनया चेह सहवासमहं कथम्'' इत्यादि। एतेन—उपासकस्य परब्रह्मसाधर्म्यप्रपञ्चनेन पूर्वाध्याये साम्यशब्दार्थो विवृतो भवतीति मार्ताण्डोक्तिः प्रकरणविरुद्धेति —सूचितम्। नह्यत्र वैयासिक जीवब्रह्मैक्यपदार्थो विव्रियते।

मोक्षपर्वगत ३१३ तमाध्यायोऽपि सांख्याभिमतनानात्वैकत्वनिरूपणद्वारा तदीयमुक्तिस्वरूपनिरूपणपरः "परेण परधर्मा च भवत्येव समेत्य वै" इत्यादिना न जीवब्रह्मैक्यरूप व्यासाभिमतमोक्षनिरूपणाशय इति, नैतद्वचनानुसारेण साम्यपदार्थनिर्णयोऽपि परेषां सांप्रतमिति सूचितम्।

एतेन—'अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम्। अनेन सार्कं यास्यामि नानयाऽहमचेतसे'ति वाक्यमपि—व्याख्यातम्। अनेन विविक्ताहङ्कारकेवलासङ्गचैतन्यसाम्यमेव बोध्यते, नतु चिदचिच्छरीरकब्रह्मसाम्यम्। साम्यं चात्रैकत्वमेव; प्रस्तुतत्वात्। नानात्वैकत्व विज्ञानं खलु पूर्वाध्याये प्रस्तुतम्, नतु नानात्व-साम्यविज्ञानम्। सर्वथा भोगमात्रसाम्यं साहंभावजीवस्य श्रीभाष्याभिमतमुक्ताध्यायविरुद्धमित्यत्र तु न विशयलेशोऽपि। अत एव—नच मात्रानया कार्यमहङ्कारकृतात्मना।' इदानीमेव शुद्धोऽस्मि निर्ममो निरहंकृतिः' इत्यादि वचनान्युपपद्यन्ते। तदिदं सिद्धम्...यत् जीवब्रह्मणोर्न साम्यमेव मुक्तिः। ब्रह्म हि पूर्वमानन्दस्वरूपो नानन्दमय इति विवेचितमिति, मुक्त्यवस्थायां जीवस्याप्यानन्दभाव एव, नत्वानन्दानुभवितृत्वमित्येव श्रुतिस्मृतिपुराणेतिहासाशयः।

यत्तु—"प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययमिति" मोक्षपर्वणि २१९ तमाध्यायगतं वचनम्, तदप्युपासकपरमेव; 'यथाज्ञानमुपासन्तः सर्वे यान्ति परां गतिम्'' इति ह्युपासनाया एव प्रकरणमिदम्, नतु ज्ञानस्य। एतेन—उक्तवचनस्य मुक्तानामानन्दानुभवितृत्वे प्रमाणतयोपक्षेपोऽपि—परास्तः। परमर्थतस्तु ब्रह्ममीमांसाप्रतिपादितः, उक्तसांख्ययोगप्रक्रियादिप्रकरणोपक्षिप्तश्च मार्गो-

ऽत्यन्तमेव भिन्न इति, सांख्यादिमतनिरासकसूत्रकाराशयनिर्णये मोक्षपर्वगतानां मार्ताण्डोद्धृतानां केषामपि वचनानां नोपयोगः। अन्ये तु विषया द्धापेक्षया नारायणोत्कर्षादिप्रतिपादका महाभारतानुसारिणः पूर्वमेव समालोचिताः। तदिदं सिद्धम्—यत् न केवलब्रह्मसूत्रदृष्ट्या, किन्तु महाभारतदृष्ट्याप्यद्वैतमतमेव व्यासाभिमतं वेदान्ततत्त्वमिति।

अद्वैतमतस्यैव बादरायणमतत्वे सांख्याद्यनुवादः प्रमाणमिति
व्यासतात्पर्यनिर्णयानुवाद-तत्समर्थनादिः।

सति चैवमात्मैकत्व-प्रपञ्चमिथ्यात्वादीनां सांख्यादिग्रन्थेषु वेदान्तिमतत्वेनानुवदोऽप्युपपद्यते। व्यासमतमेव वेदान्तमतमिति सर्वसम्प्रतिपन्नम्। सांख्यादिग्रन्थेषु तु अद्वैतमतं वेदान्तमतमिति कीर्त्यत इत्यपि न विवादास्पदम्। एवं च व्यासाचार्याणामद्वैत एव तात्पर्यमिति कथं न सिद्ध्यतीति व्यासतात्पर्यनिर्णयकारा मन्यन्ते। *एतेन—अन्यादृशस्यैव व्याससिद्धान्तस्य सोपपत्तिकं प्रदर्शितत्वात्, व्यासतात्पर्यसंशये तदीयग्रन्थान्तरेण तन्निर्णयस्यैवोचिततया पुरुषान्तरीयानुवादबलेन तन्निर्णयस्यायुक्तत्वाच*''ति परोक्तिरपि परास्ता; पुरुषान्तरीयानुवादेन हि महाजनपरीगृहीतत्वमेवाद्वैतमतस्य व्यासमतत्वे हेतुतया प्रतिपाद्यते। तच्चोपबृंहकयुक्त्यन्तरमेव, नतु सैव युक्तिरिति न दोषः। *वस्तुतस्तु...व्याससिद्धान्तोऽद्वैत एवेति न केवलं ब्रह्ममीमांसाशास्त्रेण*, किन्तु महाभारतेनापि गम्यते। पुरुषान्तरानुवादोऽपि वस्तुगत्या व्यासमतमद्वैतमतमेवेत्यत्र प्रमाणं भवितुमर्हत्येव। महाभारत-ब्रह्मसूत्रादीनामप्यद्वैतविषयत्वे विसंवादे हि महाभारतादीनां उदासीनगृहीता भावा अपि तत्त्वनिर्णयायालम्। तथाच श्रीभाष्यकाराः केवलमद्वैतं न व्यासाभिमतमिति, स्वप्रौढिमनिबन्धनमेव वदन्ति स्वीयस्यैव भाष्यस्य सौत्रत्वसमर्थनार्थमिति फलितम्। उदासीना हि साङ्ख्या ब्रह्मसूत्रादीनामद्वैतपर्यवसानं यन्मन्यन्ते, तत्तु भगवत्पादमतानुयायिनां कथं नोपष्टम्भकं भवति? कपिलादिसूत्रकारा अद्वैतवादं सूत्रविशेषाभिमतमेव निरस्यन्तीति व्यासतात्पर्यनिर्णयकारोक्तिरेवातः सांप्रतमिति पश्यामः।

साङ्ख्यादिभिर्मुख्य एव वेदान्तार्थोऽनूदितः, नत्वापातप्रतिपन्नः ।

अनेन चेदमपि सूच्यते—यत् तीर्थंकरमहाजनापरिगृहीतत्वमपि श्रीभाष्यसिद्धान्तस्य वर्तते इति, न तत्र व्यासतात्पर्यनिर्णयः संभवतीति । या तु—वेदान्तेष्वापाततः प्रतीयमाना आत्माद्वैत-प्रपञ्चमिथ्यात्वौपाधिकभेदाविद्योपाहितब्रह्मोपादानत्वादयोऽस्मिन् साङ्ख्यशास्त्रे तेषु तात्त्विकत्वबुद्धिवारणाय निराक्रियन्ते इति परेषामुक्तिः, इयंतु व्यासेनापि वेदान्ततात्पर्यनिर्णयार्थप्रवृत्तेन तन्निराकरण एव संभवति । नहि व्यासेन कुत्रापि सूत्रे आत्मा भिन्न इति वा, प्रपञ्चः सत्य इति वा, अविद्योपहितं ब्रह्म न विवर्तकारणमिति वा बोधितम् । आपातप्रतिपन्ना ह्यर्थाः साङ्ख्यैरिव व्यासेनापि कथं न निर्णेयाः? इदमनेन व्यासाचार्याणां पृथक् तत्र प्रयासानाश्रयणेनावगम्यते यत् व्यासाचार्याणामापातप्रतिपन्नतया साङ्ख्याद्यभिमता एवार्थाः स्वाभिमता अपीति । वेदान्तनिर्णयार्थं प्रवृत्तैर्व्यासाचार्यैः सन्दिग्धानि सर्वाणि वाक्यानि विचारणीयान्येवेति,यत्र तदीयन्यायाविरोधे विशिष्य न विचारः कृतः, आपातप्रतिपन्न एवार्थस्तत्र ग्रहीतव्य इति, व्याससम्मतमिति निर्धार्यते । सर्वथा तु व्यासतात्पर्यमेवानूद्य साङ्ख्यादिदर्शनेषु निराकृतमिति, व्यासतात्पर्यमद्वैत एव न श्रीभाष्यादिमत इति सिद्धम् ।

आत्मद्वैत-प्रपञ्चसत्यत्वादीनां व्याससूत्रासिद्धत्वम् ।।

एतेन—ब्रह्ममीमांसायामात्माद्वैत-जगन्मिथ्यात्वाविद्योपहितब्रह्मोपादानत्वादेः क्वचिदप्यसूत्रितत्वेन प्रत्युत तत्रापि तेषां तत्र निराकरणेन साङ्ख्यसूत्राण्यापातप्रतिपन्नवेदान्तार्थपराणीति शङ्कापि—निरवसरा । यथाच चराचरव्यपदेशाधिकरणादिष्वात्माद्वैतानिरासः, 'वैधर्म्याच्च न स्वप्नादिवदि'त्यस्य प्रपञ्चसत्यत्वनिरूपणे न तात्पर्यम्, तथा पूर्वमेव विवेचितम् । सर्वथा तु न वैयासिकं मतं श्रीभाष्यमतम् । न हि श्रीभाष्याभिमतः प्रकृतिद्वारकब्रह्मपरिणामवादः कुत्रापि सूत्रितः । केवलं खलु ब्रह्म कारणं सूत्रकारा मन्यन्ते । नहि सूत्रकाराः कुत्रापि परिणामः प्रकृतेरेव न ब्रह्मण इति सूचयन्ति । 'अजामेकां लोहितशुक्लकृष्णामि'ति वाक्यं तु तेजोऽबन्नात्मकदेवतापरमेव, नतु भवदीयप्रकृतिपरम् । नहि तस्या ब्रह्मकारणकत्वं भवन्तोऽपि मन्यन्ते प्रकृतिनित्यत्ववादिनः । कार्यावस्थां

स्थूलावस्थामाश्रित्य तु प्रकृत्यात्मकस्थूलप्रपञ्चानामेव ब्रह्मकार्यत्वं न प्रकृतेः। अजामेकामिति भागोऽवस्थाभेदेन लोहिताद्याकारत्वपर इति कल्पनायामपि न प्रमाणम्।

"ज्योतिरुपक्रमा तु" इति सूत्रस्य श्रीभाष्याननुगुणत्वम्।

"ज्योतिरुपक्रमा तु" इति केवलं सूत्रितम्, नतु प्रकृतिरिति। ज्योतिःशब्दस्तु वाक्यशेषगतलिङ्गवशेनैव ब्रह्मपरम्, नान्यत्रापीति "ज्योतिश्चरणाभिधानात्" इत्यादौ व्यवस्थापितम्। 'ज्योतिषां ज्योतिरि'त्यत्रापि द्वितीयेनैव ज्योतिः शब्देन ब्रह्मणो ग्रहणम्। सूत्रगतस्य तु ज्योतिःशब्दस्य ब्रह्मपरतायां न तथा गमकमुपलभ्यते। स्वायत्ते हि शब्दप्रयोगे किमिति ब्रह्मपदमेव न प्रयुक्तमिति शङ्कापि दुष्परिहरैव। उपक्रमशब्दोऽपि प्रभृतिपर्याय एव स्वरसः, नतु कार्यतापरः, सापितु प्रकृतेर्बोधितैवेति पूर्वमेवोक्तम्। अजाशब्देन तु प्रकृतिरेव केवलं श्रीभाष्यकारैरपि साध्यते। ब्रह्मात्मकत्वं तदधिष्ठितत्वं वा वाक्यशेषवशेन निर्धार्यते। पदार्थविषये तु न साङ्ख्यैः साकमपि विरोधः। पदविशेषार्थनिर्णयद्वारेण वाक्यार्थनिर्धारणार्थं खलु प्रथमचतुर्थपादप्रवृत्तिः। इदं च वाक्यशेषगतलिङ्गेन व्यवस्थापनं प्रथमपाद एव सङ्गतम्, न चतुर्थपादे। अत्र तु ब्रह्मपरत्वाभावे निर्णीतेपि साङ्ख्यप्रक्रियाणां श्रुतिषु परामर्शाभावमात्रं प्रतिपाद्यते इति प्रधानं वोत तेजोबन्नात्मकदेवता वेत्येव संशयो युक्तः। प्रकृतिपरिणामितावादिनां 'बह्वीः प्रजाः जनयन्तीं सरूपा' इति न विरुद्धम्। सर्वथातु नात्र ब्रह्मात्मक-कार्यकारणभावावस्थप्रकृतिसमर्थनं सूत्रकाराभिमतम्। तेजोबन्नात्मिकायाः देवतायास्त्रिवृत्करणेनैकीभावादजेत्येकवचनमित्याद्यन्यत्र विस्तृतम्। श्वेताश्वतरादौ ब्रह्मणो मायाधिष्ठातृत्वमात्रं बोध्यते, नतु ब्रह्मात्मकत्वं तच्छरीरत्वं वेति—"तथा ह्यधीयत एके" इत्यस्यापि श्रीभाष्यमते न सङ्गतिः।

अयं भावः—सत्यं मायेश्वराधीना प्रवर्तते परिणमते वेति सूत्रकारा मन्यन्ते, परन्तु नेदं तत्सम्मतं यत्मायापरिणामित्वेनैव ब्रह्मोपादानमिति। तथाच ब्रह्माधिष्ठान मायापरिणामवादः, "तदधीनत्वादर्थवत्" इति सूत्रितः 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रसिद्धः साक्षाद्ब्रह्मोपादनतावादश्चोभयं मा-

यापरिणामः प्रपञ्चः ब्रह्मैव भवतीत्यर्थस्वीकरणेनैवोपपद्यते । ब्रह्मणः प्रपञ्चभावो न मायाया इव परिणामित्वेन । "परिणामात्" इति सूत्रितः तद्भावो विवर्त एव पर्यवस्यति । एतेन—जगदुपादानभूतायाः प्रकृतेरीश्वरप्रवर्तनेनैव महदाद्यात्मना परिणामः "तदधीनत्वादर्थवत्" इति सूत्रेण समर्थित इति परोक्तिरपि—व्याख्याता । नहि तावता श्रीभाष्यमतस्य सौत्रत्वसिद्धिः । तावता हि ब्रह्मानुपादानत्वे तन्निमित्तत्वेन योगिमतम्, तस्याप्युपादानत्वेऽस्त्वद्वैतमतमेव वा सूत्रारूढं भवितुमर्हति ।

श्रीभाष्यमतस्य सूत्रानारूढत्वे निमित्तानां संकलनम् ।

तदयं निष्कर्षः—यत् व्यासनिरस्यपाञ्चरात्रसमर्थकत्वेन, सूत्रकारनिरस्तपुरुषबहुत्वावलम्बनेन, सूत्रानभिमतमुक्तिगतिसापेक्षत्वोपपादनेन, सूत्रकारानुपपादित चिदचिच्छरीरकतावादानुसारेण, सूत्रकाराप्रतिपादितविशिष्टब्रह्मकार्यकारणभावाभ्युपगमेन, सूत्रकारसमर्थितस्वाप्निक-जागरित-प्रपञ्चविशेषानुपगमेन, सूत्रकारासूचितनारायणब्रह्मतोरीकारेण, सूत्रकारानभिप्रेतजीवोत्पत्ति-धर्मभूतज्ञानादिस्वकल्पितप्रक्रियाविशेषादरेण, सूत्रोपात्तमुक्तजीवब्रह्मात्यन्ताभेदतिरस्कारेण, सूर्यकादिदृष्टान्तेन साधितौपाधिकजीवभेदानङ्गीकारेण, "न स्थानतोऽपि" "मायामात्रं तु" "आभास एव च" 'ज्योतिरुपक्रमा तु" "ज्ञोऽत एव" "उत्क्रान्तिगत्यागतीनाम्" कार्यं बादरिरस्य गत्युपपत्तेः" "अप्रतीकालम्बनान्नयति" "आत्मेति तूपगच्छन्ति" तदभिध्यानात्तु तिरोहितम्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" "आनन्दमयोऽभ्यासात्" "वृद्धिह्रासभाक्त्वम्" "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" 'प्रकृतैतावत्त्वं हि प्रतिषेधति' "जन्माद्यस्य यतः" "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" भोक्त्रापत्तेरविभागश्चेत्" इत्यादि बहुतरसूत्राणां क्लिष्टयोजनया व्याख्यानेन, बहुतरसूत्रवैयर्थ्याच्च न श्रीभाष्यमतं सूत्रारूढम्, किन्तु पूर्वोक्तप्रकारेण बादरायणाभिमतजीवैकत्ववादस्यैव समवलम्बनेन, तत्सूचितौपाधिकजीवभेदावलम्बनेन, सर्वेषां सूत्राणामद्वैत एव विशिष्टस्वारस्यप्रदर्शनेन, अद्वैताभिमतमुक्तस्वरूपस्यैव सूत्रकाराभिमतत्वेन, प्रपञ्चमिथ्यात्वोपहितब्रह्मोपादानत्वादीनामेव सूत्रकाराभिमतानामुररीका-

रेण, अत्यन्तभेदस्य जीवेश्वरयोरौपाधिकस्यैव सूत्रकाराभिमतस्यादरणेन चाद्वैत-मतमेव सूत्रारूढम्। आनन्दमयाधिकरणविषये वक्तव्यं सर्वमेव पूर्वमेवोक्तमिति, नानन्दमयाधिकरणास्वारस्यं श्रीभाष्यमते; सर्वेषां तत्तच्छरीरकब्रह्मण्येव मुख्यत-याऽऽकाशादिपदानां भूताकाशादौ भाक्तत्वस्यैव स्वीकारात् आकाशाधिकरणादौ रूढिमवलम्ब्य कृतस्य पूर्वपक्षस्यैवानवसर इति, बहून्यधिकरणानि वितथानि भवेयुः। स्थालीपुलाकन्यायेन कृतस्य विचारस्य 'यक्षानुरूपो बलिरि'ति न्यायेन स्थालीपुलाकन्यायेनैव समालोचनमप्यस्माभिः संपादितम्। सर्वथा तु व्यास-तात्पर्यनिर्णयकाराणां व्यासतात्पर्यनिर्णयोऽप्रकम्प्य इत्येवास्माकं प्रतिभाति।

इदमिदानीमालोचनीयम्—'यत् कापिलसूत्रखण्डिना अद्वैतप्रक्रियाविशेषाः सर्वेऽपि किं ब्रह्ममीमांसासिद्धा उत नेति? वयं तु पश्यामः—यत् "मायामात्रं तु" इत्यविद्यावादः, 'पराभिध्यानात्तु' इति सूत्रसिद्धस्तदवस्तुतावादः, तदनन्यत्वमार-म्भणादिसूत्रसिद्धो मिथ्यात्ववादः, उक्तमहाभारतवचनसिद्धः, अंशाधिकर-णादिसिद्धस्वाभाविकात्माभेदवादाक्षिप्तो वा जीवैकत्ववादश्च ब्रह्ममीमांसा-सिद्ध एवेति। यथाच 'तदभिध्यानादेवे'त्यादिसूत्राणां श्रीभाष्याभिमता योजना न सूत्रकाराभिमता, तथा पूर्वमेव विवेचितम्। एतेन—ब्रह्ममीमां-सायां क्वचिदप्यवस्तुभूताविद्याया जगदुपादानत्वस्यानुक्ततया परं ब्रह्म जगदुपा-दानमिति तन्निर्णीतेऽर्थे—आत्मा वा अविद्या वा उभयं वेति विकल्पस्याव-काशविरह इति परोक्तिरपि—व्याख्याता। 'मायामात्रमि'ति सूत्रेण 'पराभिध्या-नात्तु'सूत्रसहितेनावस्तुभूताविद्या सूच्यत एव; तद्दृष्टान्तेन च दृश्यत्वादिनापि मिथ्यात्वं तदनन्यत्वाधिकरणसिद्धमादायोक्तविकल्पसंभवात्। परिणामपदेन तद्भावो विवक्ष्यत इति, परिणामादिति सूत्रस्याप्यद्वैत एव तात्पर्यं पूर्वमेवो पपादितम्।

एतेन—महाभारतसिद्धो जीवैकत्ववादोऽपि—व्याख्यातः। यच्चमिथ्या-त्वं कथंचन सौगताभिमतं वक्तुं शक्यम्, आत्मैकत्ववादनिरासस्तु नान्येषा-मिति, न व्यासमतमतिरिच्य मतान्तरनिरास एव कपिलादिग्रहहृदयमिति कल्पना विकल्पसहा। सांख्यसूत्रखण्डित औपाधिकभेदस्तु—"अत एव चोपमा-

सूर्यकादिवत्'' इति ब्रह्ममीमांसासूत्रसिद्ध इति सर्वविदितमिदम्। यथा-चोक्तसूत्राणां श्रीभाष्याभितेऽर्थे न तात्पर्यम्, 'वृद्धिह्रासभाक्त्वमि'त्यादौ नञ-ध्याहारादिप्रसङ्गात् तथा पूर्वमेव विवेचितम्। स्पष्टं 'ह्यंशो नानाव्यपदेशात्' इति सूत्रे स्वरूपतोऽनंशत्वमौपाधिकमंशत्वमिति व्यक्तीकृतम्। स्वयं ह्युनिप-देव - ''यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा'' इति भेदोऽयमौपाधिक इति प्रति-पादयतीति—''अत एव चोपमा सूर्यकादिवत्'' इति सूत्रं तदर्थमंग्राहकमौ-पाधिकमेव भेदं गोचरयतीत्यवचनसिद्धमिदम्। एतेन—उपाधीनां भेदेऽपि तेषां भोगानाश्रयतया भोगाश्रयस्यात्मन ऐक्ये तद्भोगसाङ्कर्यमुपाधिभेदो न परिहर्तुं क्षम इति शङ्कापि—परिहृता।

केवलं हि चैतन्यमेकत्वेऽपि न भोक्तृ, औपाधिकं तु भोगाश्रयं भिन्न-मिति न भोगसांकर्योपत्तिः। नह्युपाधिधर्मो भोक्तृत्वमात्मनोऽध्यस्यते इति वदामः; किन्तूपहितस्यैव धर्म इति'कर्ता शास्त्रार्थवत्त्वादि'त्यधिकरणे व्यक्तमिति न दोषः। विशदं चैतद्''सन्ततेश्चाव्यतिकर'' इति सूत्रे भाष्येऽपि। सति चैवमा'भास एव चे'ति सूत्रमौपाधिकभेदस्य भोगव्यतिकरानुपपादकत्वव्यवस्थापनार्थ-मिति शङ्कापि— निरवसरा। 'असन्ततेश्चे'ति सूत्रात देहसम्बन्धात् पूर्वतन-सूत्रतोऽनुवृत्तात अव्यापकत्वेन परिच्छिन्नत्वव्यवस्थापनेनाव्यतिकरो बोध्यत इत्येव वक्तव्यम्। अन्यथांशत्वेऽपि जीवस्यैकत्वस्य सर्वजीवानां परस्परात्म-भेदस्य चाऽनङ्गीकारान्नानुज्ञापरिहारानुपपत्तिशङ्का श्रीभाष्यमते, नवाऽणुत्वे-नापि ब्रह्मांशत्वेन साम्यमयुक्ताया उक्ताशङ्कायाः परिहारसंभव इति—'अनु-ज्ञापरिहारौ 'असन्ततेश्चे'ति सूत्रद्वयमपि वितथमेव स्यात्। नहि सत्यपि देह-सम्बन्धे सत्यपि चाऽणुत्वे ब्रह्मांत्वेन साम्यमिदानीमपि परिह्रियत इति, औ-पाधिकदेहसम्बन्धात्, तत्सम्बन्धप्रयुक्ताणुत्वेन च जीवानां परस्परभेदाद्-सम्बन्धाच्च न भोगसंकर इत्येवोक्तसूत्रतात्पर्यमिति, 'आभास एव चे'त्यस्या-द्वैतिनां विवरणमेव सांप्रतम्। इदमेवाभिप्रेत्य साङ्ख्यादिप्रवचनैरपि अद्वै-तमतमेव व्यासमतत्वेनानूदितम्।

उपसंहारः

ब्रह्मसूत्राणां महाभारतवाक्यानामन्येषां च वैयासिकसिद्धान्तनिबन्धानां तात्पर्यमद्वैतमत एवेति, भगवत्पादमतमेव श्रीभाष्यकारैरन्यैश्चान्यथाऽन्यथा व्याख्यानेनाक्षिप्यते। सति चैवं व्यासतात्पर्यनिर्णये व्यासग्रन्था अपि यदि न प्रमाणम्, तर्हि वेदान्तमतमेव वैयासिकं मतमित्यत्र सर्वेषामाचार्याणामनैककण्ठ्यात् वेदान्तमतत्वेन साङ्ख्याद्यनूदितमेव व्यासमतमिति कल्पनैव साधीयसी। साङ्ख्यास्त्वत्र समीचनं मध्यस्थत्वमर्हन्ति। श्रीभाष्यमतप्रक्रिया हि अद्वैतमतप्रक्रियेव कुत्रापि नानूदिता केनापि तीर्थकरेण दर्शनकारेणापरेणेति कथं वा वेदान्तमतं वैयासिकं मतं वा श्रीभाष्यमतमिति दुष्परिहरोऽयं पर्यनुयोगः।

अयमेव चाभिप्रायो व्यासतात्पर्यनिर्णयकाराणामपि—यत् ब्रह्मसूत्राणां महाभारतादीनां वा समालोचने व्याख्याभेदमनु विप्रतिपन्ना नैव व्यासमतं वेदान्तमतं वाऽद्वैतमेवेति निश्चेतुमर्हन्तीति सूचनार्थं प्रणाल्यन्तरमेवावलम्बनीयम्, नतु महाभारतादीनां ब्रह्मसूत्राणां वा सिद्धान्तैरेवाद्वैतपर्यवसानव्यवस्थापनमसम्भवीति। यथात्र महाभारतादीनां ब्रह्मसूत्राणां चाद्वैत एव परमं तात्पर्यं स्वारस्यं च, तथा विशदमेवान्यत्रापि विस्तरेण विवेचितम्।

कुमारिलपादानामपि वेदान्तमतमात्मव्यापकत्वमतमेवेत्यत्र वार्तिकोपष्टम्भः।

यथा च वेदान्तमतमात्मव्यापकत्वादिसिद्धान्त एव न तदणुत्वसिद्धान्ते, तथा—"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन" इति वार्तिकेनावगम्यते। "ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान्" इति व्यापकत्वमात्मनो निरूप्य तदनन्तरमेवोक्तवाक्यप्रवृत्तेरात्मव्यापकतासिद्धान्त एव वेदान्तसिद्धान्त इति कुमारिलपादा मन्यन्ते।

प्रभाकरस्याप्यद्वैतमेव ब्रह्मविदां मतमित्यत्र बृहतीप्रमाणोपष्टम्भः।

प्रभाकरगुरवोऽपि—"यस्तु ब्रह्मविदामेष निश्चयः—यदुपलभ्यते न तत्-

थ्यमिति, यन्नोपलभ्यते तत्तथ्यमिति, नमस्तेभ्यः !! विदुषां नोत्तरं वाच्यम्।''
'विज्ञातृरूपना तु विज्ञानस्यागशङ्कनीया; अनाशङ्कितत्वात्, युक्तं चानाशङ्कितम्, कर्मप्रवणत्वात्। तदुक्तं भगवता —'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनामि''त्यादि वदन्तोऽद्वैतप्रक्रिया ब्रह्मवित्सम्मतेति विशदयन्तो ब्रह्ममीमांसाशास्त्रमद्वैतपर्यवसाय्येवेति मन्यन्ते। एतेषां हि श्रीभाष्यसिद्धान्तेऽद्वैतसिद्धान्ते वा न कुत्राप्याग्रहविशेष इति, एतेषां वेदान्तमतानुवादावसरेऽद्वैतमतस्यैव संग्रहणमपि वेदान्तमतमद्वैतानुगुणं प्रचार्यमाणमेव योग्यमित्यत्र प्रबलमेव प्रमाणम्। सर्वथा तु व्यासाचार्याणां स्वरूपचैतन्यव्यतिरिक्तानामुपहितब्रह्मपर्यन्तानां कार्यतावादस्यैवाभिमतत्वात् त्रिमूर्तिषु विष्णोरुत्कर्ष इत्यादौ तात्पर्याभावात् शैववैष्णववादविशेषाः केऽपि बादरायणाचार्यानभिमता इत्येव निष्कर्षः।

व्यासतात्पर्यनिर्णयकारा अपि—शिवस्यैव प्रधानत्ववादमेव कण्ठतो विशिष्य निरसितुं प्रवृत्ताः प्रसङ्गतोऽनुपङ्गतो वा विष्णूत्कर्षमपि न सांप्रतं निरूपयन्ति। मन्यामहे व्याससिद्धान्तमार्तण्डकाराः—अनुपङ्गतोऽपि निरस्यमानं विष्णूत्कर्षवादमसहमाना एव स्वीयं निबन्धं पाराशर्यविजयाद्यवलम्बनेन विरचयितुं प्रावर्तन्तेति। अयमेव विशेषो व्याससिद्धान्तमार्तण्डस्य यदंशतो पाराशर्यविजयमंशनः श्रुतप्रकाशिकावाक्यानि च तत्र तत्र स्वसिद्धान्तव्यवस्थापनाय शरणीकुर्वन्ति। ग्रन्थकाराणां व्यासतात्पर्यनिर्णयकारादीनां वा केषामपि वैयक्तिकनिन्दवादो लेशतोऽपि नावलम्बनीय इति नीतिरियमान्तं ग्रन्थशरीरे सिद्धान्तमार्तण्डकारैः परिपालितैव।

स्वमूलाचार्यमतस्थापनार्थे सादरे प्रयतने, प्रसङ्गेन स्वेतेन बहुतरग्रन्थसमालोचने, वार्धक्येऽपि ग्रन्थकालक्षेपेणैव स्वीयायुर्विनियोगसमुद्योगे च महामहोपाध्याय-श्रीईशिकाचार्या अनुकरणीया एव सर्वेषामित्यत्र तु न कस्यापि विप्रतिपत्तिः। अधिकं सत्यवसरेऽवसरान्तरे निवेदयिष्याम इति शिवम्।

॥ इति मद्रपुर संस्कृतमहाविद्यालयाधमर्ण-महामहोपाध्यायीनन्तकृष्णशास्त्रिण कृतिषु अद्वैतमार्तण्ड ॥